तथा मूर्त्याम ... न परतो वयम् ॥
लोकानुग्रहणायैव शिवेन परमेष्ठिना ।
सदाशिवादयःसर्वे मूर्त्यात्मानोऽप्यधिष्ठताः ॥
तेऽपि मूर्यात्मभावेन लब्ध्वा स्वयमनुग्रहम् ।
कुरुते चाऽनुगृह्णन्ति शिवेन समधिष्ठिताः ॥
आत्मनामेव भोगाय मोक्षाय च विशेषतः ।
मूर्त्यात्मस्वपि रागाद्या दोषाः सन्त्येव वस्तुतः ॥
तथापि तेषामेवैते न शिवस्य तु सर्वथा ।
अग्नावपि समाविष्टे ... ... ...ख कालतः ॥
इति नाग्निरसौ तत्र ताम्रसंसर्गकारणात् ।
नाग्नेरशुचिसंसर्गादशुचित्वमुपेयते ॥
अशुचेस्त्वग्निसंयोगाच्छुचित्वमुपजायते ।
एवं शोध्यात्मसंसर्गान्नैवाशुद्धःशिवो भवेत् ॥
शिवसंसर्गतस्त्वेष शोध्यात्मैव विशुद्ध्यति ।
अयस्यग्नौ समाविष्टे दाहोऽग्नेरेव नायसः ॥
मूर्त्यात्मस्वेवमैश्वर्यमीशस्यैव न चात्मनाम् ।
न हि काष्ठो ज्वलत्यूर्ध्वमग्निरेव ज्वलत्यसौ ॥
काष्ठस्याङ्गारसंसक्तिरेवमत्रापि योज्यताम् ।
तत एव जगत्यस्मिन्काष्ठपाषाणमृत्स्वपि ॥
शिवावेशवशादेव शिवत्वमुपचर्यते ।
इत्यतो बहुधा भिन्नः शिवोऽनुग्रहकारणात् ॥
तथा चैकात्मवादे तु श्रूयते हि तथा वचः ।
आत्मसंज्ञः शिवः शुद्धः एक एवाद्वयः सदा ॥
इत्यतो द्वैतसिद्धान्तनिर्णयः स निरस्यते ।
अद्वैतमागमशिरोभिरुपासनायामुक्तं तवेति परमार्थतया न वाच्यम् ।
भेदःस्फुटो गरुडमान्त्रिकयोरलीकं तदात्म्यभावनमथापि विषं प्रमार्ष्टि ॥

इति वेदान्तवाक्यानामावेशाद्वैत ईरितः ।
कृतार्थेन विरोधः स्यात् यथा पूर्वमुदाहृतम् ॥
स एकः सर्वभूतेषु गूढो व्याप्तश्च सर्वतः ।
सर्वभूतान्तरात्मा च कर्माध्यक्षः स कथ्यते ॥
तत एव जगत्यस्मिन्काष्ठपाषाणमृत्स्वपि ।
शिवावेशवशादेव शिवत्वमुपचर्यते ॥
इत्यतोऽत्र समावेशसाम्यमुक्तिश्च निश्चिता ।

अथ कृतचर्याक्रियायोगनिष्ठानां कर्मसाम्यमलपरिपाकवशात् शक्तिनिपातयुक्तानां साधकानामेव मुक्तिप्रतिपादनमितरेषां शिवज्ञानानुदयात् न मुक्तेः सम्भव इति । तदुक्तं च

शिवचर्यादिसम्पत्त्या शक्तिपातपवित्रितः ।
योग्यो निर्वाणदीक्षायां ततोऽनुष्ठानतत्परः ॥
मुक्त एव भवेन्नान्यो वायव्यां हि तथा वचः ।
शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ॥
अन्यथा तु तथा कृष्ण तत्र शुद्धिर्न जायते ।
न विद्या न शिवाचारो विमुक्तिर्न च सिद्ध्यति ॥
तस्मादङ्गानि संवीक्ष्य शक्तिपातस्य भूरिशः ।
ज्ञानेन क्रियया वाथ गुरुःशिष्यं विशोधयेत् ॥
यो यथा कुरुते मोहात् स विनश्यति दुर्मतिः ।
तस्मात्सर्वप्रयत्नेन गुरुः शिष्यान् परीक्षयेत् ॥
लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः ।
सा यस्मात्परमा शक्तिः प्रबोधानन्दरूपिणी ॥
आनन्दबोधयोर्योगमन्तःकरणविक्रिया ।
यया स्यात्कंम्परोमाञ्चस्वरनेत्राङ्गविक्रिया ॥
शिष्यं तं लक्षणैरेभिर्गुरुः कुर्यात्परीक्षणम् ।
ततो दीक्षां गुरुः कुर्यात्सर्वपापविनाशिनीम् ॥

दीयते येन विज्ञानं क्षीयते पाशबन्धनम् ।
तस्मात्संस्कार एवेदं दीक्षेत्यपि च कथ्यते ॥
शाम्भवी चैव शाक्ती च मान्त्री चैव शिवागमे ।
दीक्षोपदिश्यते ज्ञेया शिवेन परमात्मना ॥
गुरोरालोकमात्रेण स्पर्शात्संभाषणादपि ।
सद्यः सञ्जायते प्रज्ञा पाशोपक्षयकारिणी ॥
सा दीक्षा शाम्भवी प्रोक्ता सा पुनर्भिद्यते द्विधा ।
तीव्रा तीव्रतरा चेति पाशोपक्षयभेदतः ॥
यया स्यान्निर्वृतिः सद्यः सेयं तीव्रतरा मता ।
तीव्रा तु जीवितान्तं या पुंसां पाशविमोचिका ॥
शाक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ।
गुरुणा योगमार्गेण शाक्ती या क्रियते मता ॥
मान्त्री क्रियावती दीक्षा कुण्डमण्डलपूर्विका ।
मन्दा मन्दतरा लेशात् कर्तव्या गुरुणा बहिः ॥
तदेवं दीक्षितस्यात्र शैवकर्म च विश्रुतम् ।
नाशिवः शिवमभ्यासेन्नाशिवः शिवमर्चयेत् ॥
नाशिवस्तु शिवं ध्यायेन्नाशिवः शिवमाप्नुयात् ।
तस्माच्छैवीं तनुं कृत्वा त्यक्त्वा च पशुभावनाम् ॥
शिवोऽहमिति सञ्चिन्त्य शैवकर्मसमाचरेत् ।
कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुच्यते ॥
ध्यानयज्ञो ज्ञानयज्ञः पञ्च यज्ञाः प्रकीर्तिताः ।
कर्मयज्ञरताः केचित्तपोयज्ञरताः परे ॥
जपयज्ञरताश्चान्ये ध्यानयज्ञरतास्तथा ।
ज्ञानयज्ञरताश्चान्ये विशिष्टाश्चोत्तरोत्तराः ॥
कर्मयज्ञो द्विधा प्रोक्तः कामाकामविभेदतः ।
भोगकामी ततो भुक्त्वा कामासक्तः पुनर्भवेत् ॥

अकामो रुद्रभावेन भोगान्भुक्त्वा ततश्च्युतः ।
तपोयज्ञरतो भूत्वा जायते नात्र संशयः ॥
तपस्वीति ततस्तस्मिन्भोगान्भुक्त्वा ततश्च्युतः ।
जपध्यानरतो भूत्वा जायते भुवि मानवः ॥
जपध्यानरतो मर्त्यस्तद्वैशिष्ट्यवशादिह ।
ज्ञानं लब्ध्वाऽचिरादेव शिवसायुज्यमाप्नुयात् ॥
तस्मान्मुक्तेश्चिराध्येतुं कर्मयज्ञो हि देहिनाम् ।
अकामःकामसंयुक्तो बन्धायैव भविष्यति ॥
तस्मात्पञ्चसु यज्ञेषु ध्यानयज्ञरतो भवेत् ।
ध्यानं ज्ञानं च यस्यास्ति तीर्णं तेन भवार्णवात् ॥
आत्मस्थं यः शिवं त्यक्त्वा बहिरभ्यर्चयेन्नरः ।
हस्तस्थं पिण्डमुत्सृज्य लिहेत्कूर्परमात्मनः ॥
शिवज्ञानं भवेद्ध्यानाज्ज्ञानं भूयः प्रवर्तते ।
तदुभाभ्यामेव मुक्तिस्तस्माद्ध्यानरतो भवेत् ॥
द्वादशान्तेऽथवा मूर्ध्नि ललाटे भ्रूयुगान्तरे ।
नासाग्रे वाथवा नेत्रे कन्धरे हृदयेऽथवा ॥
नाभौ वा शाश्वतस्थाने श्रद्धाशुद्धेन चेतसा ।
बहिर्योगविचारेण देवं देवीं च पूजयेत् ॥
अथैवं श्रूयते तत्र वायव्यां कुत्रचित्पुनः ।
नामाष्टकमयो योगः शिवेन परिकल्पितः ॥
तेन योगेन सहसा शैवी प्रज्ञा प्रवर्तते ।
प्रज्ञया परमं ज्ञानमचिराल्लभते स्थितिम् ॥
प्रसीदति शिवस्तस्य यस्य ज्ञानं प्रतिष्ठितम् ।
प्रसादात्परमो योगःस शिवं चापरोक्षयेत् ॥
शिवापरोक्ष्यात्संसारकारणं तु वियुज्यते ।
ततः स्यान्मुक्तसंसारो मुक्तःशिवसमो भवेत् ॥ इति ॥

अथात्मनां शिवेन विशिष्टाद्वैतसिद्धसायुज्यप्राप्तौ शिवावेशवशात्तेषां तेन साम्यप्रतिपादनम् अन्यथैकात्मवादरीत्या सायुज्यमात्रसिद्धौ भूयो भूयः संसारप्राप्तिदोषादिसम्भवात् पुनः समुत्पत्त्यादिसाम्याभ्युपगमे त्वद्वैतश्रुतिविरोधादनित्यत्वादिदोषापत्तेः—तदुक्तं च—

श्रौतपाशुपते मुक्तिर्मलापायादनन्तरम् ।
शिवावेशवशादुक्तविशिष्टाद्वैतवर्त्मना ॥
शिवधर्मान्वितो मुक्तः शिवैकज्ञानपूर्वकम् ।
आत्मानन्दमवाप्नोति तथैव वचनं श्रुतम् ॥
अयस्यग्नौ समाविष्टे दाहोऽग्नेरेव नायसः ।
मूर्त्यात्मस्वैवमैश्वर्यमीशस्यैव न चात्मनाम् ॥
तत एव जगत्यस्मिन्काष्ठपाषाणमृत्स्वपि ।
शिवावेशवशादेव शिवत्वमुपचर्यते ॥
तिलेषु वा यथा तैलं दध्नि वा सर्पिरर्पितम् ।
यथापःस्रोतसा व्याप्ता यथारण्ये हुताशनः ॥
एवं महात्मनात्मानमात्मन्यपि विलक्षणम् ।
सत्येन तपसा चैव नित्ययुक्तोऽनुपश्यति ॥
तमेवमात्मनिष्ठं तं ये पश्यन्ति मुमुक्षवः ।
तेषामेव सुखं नित्यं नेतरेषां महात्मनाम् ॥
ततः स्यान्मुक्तसंसारो मुक्तः शिवसमो भवेत् ।
इत्यादि बहुधा पूर्वं श्रौतशैवमुदाहृतम् ।
अथावेशवशादेव शिवधर्मान्वितो यदि ॥
स चात्मा जड एव स्यादिति शङ्का न विद्यते ।
आत्मासौ चेतनो यस्मात् समाविष्टः शिवेन तु ॥
ग्रहैराविष्टपुरुष इव वेत्ति करोति च ।
अन्यथासौ शिवः कुर्यात्पाशाविष्टः स्वकर्म च ॥
घटाविष्टः पिशाचश्च तथैव वचनं श्रुतम् ।
शिवस्य परिपूर्णस्य परानुग्रहमन्तरा ॥

न किञ्चिदपि कर्तव्यमिति साधु विनिश्चितम् ॥
स्वभावादेव पर्याप्तं परानुग्रहकर्मणि ।
अन्यथान्यस्वभावेन न किमप्यनुगृह्यते ॥
परं सर्वमनुग्राह्यं पशुपाशादिकं जगत् ।
परस्यानुग्रहार्थं तु पत्युराज्ञासमन्वयः ॥
यत्तत्पुनरनुग्राह्यं परतन्त्रं तदिष्यते ।
अनुग्रहादृते नास्य भुक्तिमुक्ती त्वनन्वयात् ॥
मूर्त्यात्मानोऽप्यनुग्राह्या इति पूर्वमुदाहृतम् ।
सदाशिवादयः सर्वे मूर्त्यात्मानोऽप्यधिष्ठिताः ॥
तेऽपि मूर्त्यात्मभावेन लब्ध्वा स्वयमनुग्रहम् ।
अन्यात्मनोऽनुगृह्णन्ति शिवेन समधिष्ठिताः ॥
आत्मनामेव भोगाय मोक्षायेत्यादिकं पुनः ।
अतो हि परमुक्तौ तत् ज्ञानानन्दः श्रुतः स्फुटम् ॥
द्वौ सुपर्णौ च सयुजौ समानं वृक्षमास्थितौ ।
एकोऽत्ति पिप्पलं स्वादु परोऽनश्नन्प्रपश्यति ॥
वृक्षेऽस्मिन्पुरुषो मग्नो मुह्यमानस्तु शोचति ।
जुष्टमन्यं यदा पश्येदीशं परमकारणम् ।
तदास्य महिमानं च वीतशोकः सुखी भवेत् ॥
रसो ब्रह्म रसं लब्ध्वाऽऽनन्दी भवति नान्यथा ।
निजानन्दं सदा पश्यन्न पश्यत्यखिलं जगत् ॥
इति तत्समता तस्य विमुक्तस्य न सर्वथा ।
किन्त्वेकदेशतः सिद्धा यत एवं वचः श्रुतम् ॥
नित्यानामप्यसौ नित्यश्चेतनानां च चेतनः ।
एको बहूनां चाकामः कामकामान् प्रयच्छति ॥
आत्मानं च पृथक् कृत्वा प्रेरितारं तथा पृथक् ।
असौ जुष्टस्ततस्तेन ह्यमृतत्वाय कल्पते ॥

पशोः पत्युश्च पाशस्य तत्त्वतोऽस्ति यदन्तरम् ।
ब्रह्मवित्तद्विदित्वैव योनेर्मुक्तो भविष्यति ॥
न तस्य विद्यते कार्यं कारणं च न विद्यते ।
न तत्समो नाधिकश्च क्वचिज्जगति दृश्यते ॥
सर्वज्ञत्वादिधर्मेषु चैवमेव यतो वचः ।
यदा विकासयत्येव रवौ पद्मानि भानुभिः ॥
समं न विकसन्त्येव स्वस्वभावानुरोधतः ।
स्वभावोऽपि हि भावानां भाविनोऽर्थस्य कारणम् ॥
न हि स्वभाविनोऽर्थस्यासन्तं कार्येषु साधयेत् ।
सुवर्णमेकं साङ्गारं द्रावयत्यग्निसङ्गमः ॥
एवं पक्वमलानेव मोचयेत शिवः परान् ।
यद्यथा भवितुं योग्यं तत्तथा न भवेत् स्वयम् ॥
विना भावयता भर्त्रा स्वतन्त्रः स ततो भवेत् ।
स्वभावविमलो यद्वत्सर्वानुग्राहकः शिवः ॥
स्वभावमलिनो यद्वदात्मानो जीवसंज्ञिताः ॥
इति वायव्यवचनमथ स्कान्दे विशेषतः ।
बध्वा पशूनिमान्पाशैः शरीरकरणादिभिः ॥
मोचयेत सदा शम्भुः सर्वज्ञत्वादिशक्तिमान् ।
लीलासाधनभूतास्ते ब्रह्माद्याः पशवः प्रभोः ॥
सर्वज्ञोऽयमतः शम्भुः सृजत्यवति हन्ति च ।
तृप्तो यतः सदादेवः सर्वानुग्राहकः स्मृतः ॥
बोधोऽनादिःपरस्येति बोधकः सकलात्मनाम् ।
स्वतन्त्रशक्तिर्देवेशः पक्वान्मोचयति प्रभुः ॥
अलुप्तशक्तिमान्यस्मात्तस्मान्मोचनकारकः ।
अनन्ताः शक्तयोऽस्यैव निमित्तमखिलात्मनाम् ॥
एवं षडङ्गवान् पञ्चब्रह्मरूपी सदा शिवः ।

ज्ञेयः पशुपतिः सर्वैः पशुपाशविलक्षणः ॥
इत्येवमात्मनो भावाच्छिवसाम्यं न सर्वथा ।
अनेकेश्वरवादादि दोष एव ततोऽन्यथा ॥
तथा तद्भागतःसाम्ये यदन्यद् दूषणं श्रुतम् ।
केनचित्साधनेनैव मुक्तः शिवसमो भवेत् ॥
इत्येवं केचिदिच्छन्ति वादिनो मुनिपुङ्गवाः ।
वार्तामात्रमिदं प्रोक्तं सर्वथा न तदर्थवत् ॥
एकदेशेन वा जीवः किं वा सर्वात्मना समः ।
एकदेशेन चेत्सर्वे शिवाः संसारवर्तिनः ॥
एकदेशेन सर्वेषामस्ति साम्यं शिवेन हि ।
सर्वात्मना चेत्साम्यंस्यात् सर्वथा शिव एव सः ॥
भेदकाकारशून्यत्वाद्भेदाभावाच्च वस्तुनः ॥
तस्माज्जीवः स्वतः साक्षात् शिवः सत्यादिलक्षणः ।
इत्यत्र भागतः साम्ये दूषणं तु न बन्धवत् ॥
न सन्ति भविनां यस्मादात्मानं सर्वथा यतः ।
न चाम्या सर्वथा साम्ये परिपूर्णमनोरथः ? ॥
स्वरूपावाप्तिरेव स्यादिति मोक्षस्य लक्षणात् ।
तदेवं भागतः साम्यं कामिकादौ च विश्रुतम् ॥
शिववच्छाश्वतः शुद्धः सृष्टिधर्मविवर्जितः ।
इत्याद्येकात्मवादे तु स्फुटमुक्तं च दूषणम् ॥
त्वन्मते परविज्ञाननिष्पन्ना अपि मुक्तयः ।
भजते नाविसंवादमाम्भसा इव कृष्टयः ॥
समुत्पत्त्याऽथवा साम्ये सद्य एव विनश्यति ।
संक्रान्तौ तु न दृष्टान्तो न मानं व्यक्तिसाम्यतः ॥
न च सृष्ट्यादि कुर्वन्ति स्वार्थनिष्ठा इतीरणात् ।
तथा तत्कृत्यविरहात् सर्वज्ञत्वेन साम्यता ॥

सर्वज्ञत्वं शिवस्यापि ज्ञेयं यत्सर्वकृत्यतः ।
एवं च सति षाड्गुण्यसाम्यवादो निरस्यते ॥
ज्ञत्वकर्तृत्वमूलेन षाड्गुण्यप्रतिपादनात् ।
न चास्य कृत्यविरहेऽप्यस्तु सर्वार्थवेदनम् ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
इति न्यायादसाध्यार्थः साधनेऽप्यप्रवृत्तिमान् ॥
जगत्कृत्यप्रवृत्तस्य किं तद्विज्ञानतः फलम् ।
एवं बहुविधाशेषवस्तुव्यापारदर्शिनः ॥
जायते कापि संप्रीतिः सा हि तस्य प्रयोजनम् ।
नैवमेतादृशाज्ज्ञानात्प्रीतिलेशो न जायते ।
यन्नास्त्यतिशयः कश्चित्तद्गृहीतेषु वस्तुषु ।
अस्य मुक्तस्य सदृशा अन्ये मुक्ताः शिवेन ते ॥
बद्धास्तद्यजनार्थाश्च न्यूनाःकोऽतिशयस्ततः ।
यदि सृष्टयत्ययं शम्भोःकृत्यातिशयदर्शनात् ।
तदा तत्साम्यवादोऽयं त्वया दत्तजलाञ्जलिः ॥
सति ह्यतिशये शम्भौ नवतत्त्वान्तदर्शिनम् ।
कर्तुमर्हसि तस्मात्त्वं भग्ना सर्वज्ञताप्यसौ ॥
किञ्च तच्छिवकृत्यस्य भानं चिदचिदात्मके ।
जगत्येव नचास्पन्दे शिवे मुक्तान्तरेषु वा ॥
तन्मुक्तस्य जगच्चेष्टा ज्ञानं तत्स्मरणात्मकम् ।
न्यायो ह्यनादौ संसारे किं न संभवति स्वयम् ॥
अपि वा परमुक्तो तत् ज्ञानं योगविशेषतः ।
यथार्थं विश्वविज्ञानाज्जीवन्मुक्तः प्रजायते ॥
समाधौ मलमुत्सार्य चान्यदेशचरित्रकम् ।
जायते येन तत्सर्वं योगिभिर्योगदर्शनम् ॥
इत्यादि वचनं तत्र प्रमाणं परिदृश्यते ।

तदर्थेष्वनुभूतेष्वप्यस्ति नातिशयः कृतः ॥
अस्तु वातिशयः कश्चिदस्य प्रीतिकरो न सः ।
दयाकरस्तु बद्धानां दर्शनाज्जायते हि सः ॥
यथा तुल्यः शिवोऽप्येषां क्लेशं दृष्ट्वा कृपानिधिः ।
मुक्तिं करोति कालेन श्रूयते तच्च सर्वतः ॥
जगत्सृष्टिस्थितिध्वंसं कारुण्याच्च शिवात्मकम् ।
एवं स्वभावमलिनान् सर्वदा दुःखिनः पशून् ॥
स्वाज्ञौषधविधानेन दुःखान्मोचयते शिवः ।
संसारस्येश्वरो नित्यं समूलस्य निवर्तकः ॥
संसारवैद्य इत्युक्तः स च तत्त्वार्थवेदिभिः ।
यथा वात्र द्वयोर्लोके समं कारागृहस्थयोः ॥
विमुक्तोऽन्यतरं वीक्ष्य नासौ सुप्रीतिमृच्छति ।
किं तु तं दयते क्लेशात्तथा बद्धं च मुक्तिभाक् ॥
तथा सति स चाकिञ्चित्करः सन्दुःखितः सदा ।
अन्यथा प्रीतियुक्तश्चेत्स हि दुष्टतमो भवेत् ॥
तथा तज्ज्ञानतस्तुष्टिर्न शिवस्यापि विश्रुता ।
न शिवेन विना किञ्चित्प्रवृत्तिरिह विद्यते ॥
तत्प्रेरितमिदं सर्वं तथापि न स तुष्यति ।
शक्तिराज्ञापिका तस्य नियन्त्री सर्वतो मुखी ॥
तया ततमिदं विश्वं तथापि न स तुष्यति ।
वायव्ये हि ततश्चोक्तमेवं त्वन्मतवादिभिः ॥
नात्मच्छेदोऽपवर्गो न च पशुशिवयोरैक्यमत्रापवर्गो
नाविद्याग्रासहानिर्नच गुणविलयो नापि पाषाणमुक्तिः ।
यद्बोधानन्दरूपत्रिमलविगमने व्यक्तमात्मस्वरूपं
तत्सायुज्येनवाच्यं शिवसदृशविभुःशैवतन्त्रेऽपवर्गः ॥
पश्यन्वागविनान्तं तत् कर्मवैचित्र्यवेष्टितम् ।

मुक्तस्तिष्ठति तूष्णीको यदिहास्य पुमर्थता ॥
नह्यन्यतरदत्रेष्टप्राप्त्यनिष्टप्रहाणयोः ।
ततश्च शिवसाम्योक्तरीत्या युक्ति पुरःसरम् ॥
विशिष्टाद्वैत संसिद्धा शिवसायुज्यलाभतः ।
प्रकारान्तरतःसिद्धः सर्वज्ञत्वादिधर्मतः ॥
शिवधर्मान्वितो मुक्तो जीवः शिवसमो भवेत् ।
इत्येवं संग्रहादेव श्रौतपाशुपतो मतः ॥
दर्शितं चात्र वायव्यसंहितावचनादिभिः ।

என வருமாற்ருன் வைதிக பாசுபதம் ஆமாறுணர்க. இதன் மறுப்பு. "என்னும் இம்மதம் ஆவேச சமபேதத் தியைந்ததொரு வாதமென்ப ருணர்ந்தோ ரெல்லாம்" என்பதனுல் விளங்கும், இவ் வைதிக பாசுபதிகள் ஞானுந்தங் கூறுமாறே பெரும்பான்மையுஞ் சாதனுங்க பலபூருவகஞ் சிவ தத்துவாந்தம் முழுதுணர்ந்து கூறினும், ஏகாநேகம் இரண்டு மின்றி யெங்கும் அநந்நியமாய் நிறைந்த சிவாத்துவித மறியாது சமாவேச அத்துவிதம் கூறுமாற்ருற், போகாவஸ்தித சிவகுணுவேச முண்டாகலிற், பாகதத்துவத்துள் (?) உயர்ந்த சிவதத்து...... காபாலிகளாவேசசமதை கூறினும் மேலுள வைந்தவ ஆணவாதி ஞானமின்றி மாயாந்த ஞானமாத்திர முண்மையின்,

ऊर्ध्वसंपुटके गेहे मुक्तिरुक्ता कपालिनाम् ।

என்று மாயா தத்துவப் பிராப்தி கூறியது. இனி,

संक्रान्तिशैवं काश्यपं समावेशं तु कौशिकम् ।

என்னும் இரேளரவாகமோக்த சமாவேச சமதாவாதிகட்கும் இவ்வாறு சிவ தத்துவப் பிராப்தியாக வேண்டும் பிறவெனின், அவர்களாகமாந்தங் கூறு மாறே சதாசிவ சர்வஞ்ஞத்துவாதி குணுவேச சமதை கூறுமாற்ருல் சதாசிவ தத்துவப் பிராப்தியன்றி, அவர்போல் ஆனந்தானுபவாந்தங் கூறுமாற்ருல் அதனை யுண்டாக்கும் அநாசிருதா பதமான சிவதத்துவப் பிராப்தி வாராதென்க. அது,

शक्तितत्त्वे तदद्वैताः शिवतत्त्वे परे स्थिताः ।

எனச் சித்தாந்த ரகசியங் கூறுமாற்ருனு முணர்க,

இவ்வாறன்றி, நீலகண்ட சிவாசாரியார் முதலிய வைதிக பாசுபதர் ஆன்மா அணுவென்றும், சிவோஹம் பாவனையாற் சிவனைப்போல வியாபகாதி குணங்கள் (ஆன்மாக்களுக்கு) உண்டாமென்றுங் கூறுவர். அது,

जीवन्मुक्तस्तु तद्विद्वान् पूर्वोपाधिगुणान् त्यजेत् ।
सर्वगत्वादिधर्मित्वं भेजे भ्रमरकीटवत् ॥

என்னும் உற்பத்தி சாமிய வாதம் போலும். அது பெரும்பான்மையும் வேத வாக்கிய மூலமாகலின் அவ் வந்தணர் வாய்க்கேட்டுணர்க. இவ்வாறு வரும் பாசுபத பேதங்கள் விரிவிற் கண்டுகோள்க. இப் பாசுபதம் தாந்திரிகம் வைதிக மென இருவகைப்படு மென்பது.

तन्त्रं पाशुपतं चान्यत्पुराणं धर्मशास्त्रकम् ।

என்னும் காமிகத்தில் வரும் மதபேதோத்தேசத்தாற் கண்டுகோள்க இவ் வகச் சமய முத்திக்குச், சித்தாந்த தீபிகையில் உதாகரித்தபடி சருவஞானோத்தர வசனம் :—

ज्ञानचर्यारतो बौद्धो बुद्धितत्त्वमवाप्नुयात् ।
तामसं जिनभक्तानां पौरुषं पुरुषवेदिनाम् ॥
केवलार्थविदः कालं प्राप्नुवन्ति जितेन्द्रियाः ।
परविद्येश्वरस्थानं सोमसिद्धान्तवादिनाम् ॥
पाशुपतास्तु मायायां विद्यायां च महाव्रताः ।
नाप्नुवन्ति मृषा युक्ता शैवं पदमनामयम् ॥

என்றவற்றுட் சிலவருமாறும் கண்டு கோள்க, இவற்றுள்,

केवलार्थविदःकालं प्राप्नुवन्ति जितेन्द्रियाः ।

என்பது காலேசுவரவாதி முத்தி கூறியது. ஈண்டுக் கேவலமென்றது சகலத் திற்குஞ் சுத்தத்திற்கு முபலக்ஷணம்; "तामसं जिनभक्तानां" என்புழித் தாமச குணம் சாத்துவிகத் திற்கும் இராசதத்திற்கு முபலக்ஷணமானது போல. எனவே கேவல சகல சுத்தாவத்தை ரூபமாகிய காலம் கடவுளென்பர் காலேசுவர வாதிகள். அது,

कालःसृजति भूतानां कालः संहरति ध्रुवम् ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥

என்பதனுல் விளக்கும். இக் கால வாதிகள் பாசுபத பேதத்திற் சந்திர வாதாதிகள் போலக் காபால சைவர் மதமேனப் படுவரேன முற்கூறிய வாறே, காபால சைவராகலின், அவர் முத்தி காலதத்துவப் பிராப்தி யேன்று கூறியவாறு அன்றிக் கேவ........கவான சங்காரத்தைக் கேவல மேன்றதாக்கி அச் சங்காரஞ் சிருட்டிதிதிக்கு உபலக்கணமேனக் காலதத்துவ நிலைமை கூறினுமாம். வைதிகர் கால முண்டேனக் கோண்டும் மாயை தானே காலமுமாமேன மயங்கக் கூறு மாற்ருற், காலதத்துவ லக்ஷணம் புலப்படக்கோண்டு கூறுவது சைவ மன்றியின் மையின், அக்காலவாதி சைவனு மேன்றது. இவ்வாறன்றி, அகோரசிவாசாரியார் केवलत्वं कालादि तत्ववियोगमेवार्थं परं प्रयोजनं मन्वानाः केवलार्थविदःपाशुपताः कालमिति कालतत्वसमानदेशं मायायाः कार्यग्रन्थिं प्राप्नोति என்ருராலோ எனின், கேவலார்த்த வித: என்பதற்குப் போருள் கூறியது, காலதத்துவ வாதிக்கே ஏற்றலானும், காலத்திற்கு மாயை எனப் போருள் கூறல் ஏலாமை யானும், பாசுபதர் என்பது மேலே "पाशुपतास्तु मायायाम्" எனக் கூறுதலானும், சுத்தாத்வைதாகமமான சர்வ ஞானேத்தரம் என்னும் யோக சாங்கியாகமத்திற்குப் பேத வாத மாயுரை யிட்டது போல் ஈண்டுங் கூறுதலின், அது போருந்தாதேன்க. அவர் சர்வ ஞானேத்தர வசனங்களுள், சில காணுதுரையிட்டதுபோல, மேலே "பாசுபதாஸ்து மாயாயாம்" என்பது காணுர் போலும். இனி,

परविघ्नेश्वरस्थानं सोमसिद्धान्तवादिनाम् ।

इति ये पुनः सिद्धस्य सर्वज्ञत्वसर्वकर्तृत्वमप्युपगम्य परमेश्वरप्रेर्यत्वमिच्छन्ति ते नेश्वरतत्वप्राप्तिमन्तस्त एव सोमसिद्धान्तवादिनः । என்று அறியத்தக்கது. வசனுந்தரங்களால் வேறுபட வருவனவேற் காண்க. சோம சித்தாந்தம் காளாமுக பேதம் என்பாரும் உளர். இவ்வாறு வரும், அகச் சமயபேத பந்த முத்திகள் இக்காலத்தாகமங்களிற் புலப்படக்காணுமையின், இது கண்டது கோண்டு கூறினவற்றை விரிந்த நூல்களிற் கண்டு பேதமுண்டேல், அவ்வாறுணர்ந்து கோள்க. பரமோக்ஷ நிராசகாரிகையில் (2 முதல் 6 வரை)

अव्याकृतादिष्वव्यक्तत्वं लय एव विकारिषु ॥
महागणो महेशस्य त्वकर्ता सर्ववेद्यवित् ।
कर्तृत्वेऽपि प्रयोज्यत्वं समत्वं तेजसां निधेः ॥

आधिक्यं परमेशानां निर्मलत्वं च केवलम् ।
सिद्ध एव हि कर्तृत्वमौदासीन्यं महेश्वरे ॥
सत्कार्यकरणोपतस्तारकाभुवने स्थितिः ।
ज्ञानकर्तृत्वयोर्नाशः सर्वनाशस्ततः परः ॥
स्वमतैर्वादिभिस्त्वेवं विमुक्तिः परिकल्पिता ।

என்றுற்போல வருவன பிறவும் அருணந்தி சிவாசாரியார் "பிறரைப் போலின்று மைதமி........ம........பிது" எனச் சிவஞான சித்தியார் மற்றதிற் புலப்படக் கூறினுற் போலக் கூறுது केचित् अन्ये परे எனக் கூறினமையின், விளங்காமையாற் பெரு நூல்களிற் காண்க............என்றது. அவ்வகச் சமயங்கள் வாயு புராணத்தில்:—

शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च स स्मृतः ।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः ॥
अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनाय वै ।
वेदवादविरुद्धानि मयैव कथितानि तु ॥
वामं पाशुपतं चैव लाकुलं चैव भैरवम् ।
न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत् ॥

எனவும், வாசிட்ட லிங்கத்தில்.

पाञ्चरात्रं प्रशंसन्ति केचिद्भागवतं मुने ।
केचित्कापालमिच्छन्ति केचित्पाशुपतं मुने ॥
केचिद्बौद्धं प्रशंसन्ति केचिज्जैनं परं मुने ।
केचिल्लोकायतं ब्रह्मन् केचित्सोमं महामुने ॥
लाकुलं केचिदिच्छन्ति तथा केचिच्च भैरवम् ।
केचिद्वामं प्रशंसन्ति केचिच्छाक्तं तथैव च ॥
शाम्भवं केचिदिच्छन्ति यामलं भुवि केचन ।
अन्यानि यानि शास्त्राणि विरुद्धानि महामुने ॥
स्वतः प्रमाणभूतेन वेदेन मुनिसत्तम ।

तान्येव श्रद्धया युक्ता परिगृह्य द्विजातयः ॥
आचरन्ति महामूढा युगान्ते समुपस्थिते ।

எனவும், சுவேதாரண்ய மான்மியத்தில்,

बौद्धाद्यमार्हतान्तं च कल्पयामास वै हरिः ।
कापालादि च वामान्तं हरस्तन्त्रमथाकरोत् ॥
वात्स्यायनं लोकायतं चार्वाकं विधिना कृतम् ।
एवं त्रिमूर्तयःकृत्वा पाषण्डस्थापकानि तु ॥
तन्त्रेषु दीक्षिताःक्रूरा बौद्धवामादिषु भ्रमात् ।
ततस्ते भ्रंशिताः सर्वे वेदमार्गाच्छुभावहात् ॥

எனவும் பிறவும் வருமாற்றாற் சேவியங்களல்ல வென்ற புராண வசனங்களெவ்வாறுமெனில், அது வைதிக பிரசம்ஸாபரமான எல்லாம் பிரமாணமாய்ச் சித்தபாகானுசாரமாய், அந்த அந்த அதிகாரிகளால் சேவியமாம் என்க. இதனாேயன்றே சூதசங்கிதையில் அவ்வாறு கூறுவது?

अथातः संप्रवक्ष्यामि मार्गप्रामाण्यनिर्णयम् ।
श्रद्धया सहिता यूयं शृणुध्वं मुनिपुङ्गवाः ॥
वेदांश्च सर्वशास्त्राणि पुराणं भारतं तथा ।
वेदाङ्गान्युपवेदांश्च कामिकाद्यागमानपि ॥
कापालं लाकुलं चैव तयोर्भेदान् द्विजर्षभाः ।
तथा पाशुपतं सोमं भैरवप्रमुखागमान् ॥
तेषां भेदोपभेदांश्च शतशोऽथ सहस्रशः ।
विष्ण्वागमान् तथा ब्राह्मान् बौद्धार्हतागमानपि ॥
लोकायतं तर्कशास्त्रं बहुविस्तारसंयुतम् ।
मीमांसामतिगम्भीरां सांख्ययोगौ तथैव च ॥
अनेकभेदभिन्नानि तथा शास्त्रान्तराणि च ।
निर्ममे शङ्करः साक्षात् सर्वज्ञः सङ्ग्रहेण तु ॥
प्रसादादेव रुद्रस्य ब्रह्मविष्ण्वादयः सुराः ।

सिद्धविद्याधरा यक्षा राक्षसाद्यास्तथैव च ॥
मुनयश्च मनुष्याश्च महाभागा द्विजोत्तमाः ।
तान्येव विस्तरेणैव सङ्ग्रहेण च वा पुनः ॥
कुर्वन्ति तानि मानानि कथितानि मनीषिभिः ।
अधिकारिविभेदेन नैकस्यैव सदा द्विजाः ॥
तर्कैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः ।

என வருமாற்ருன் உணர்க. முற்கூறிய,

वेदवादविरुद्धानि मयैव कथितानि तु ।

எனவும்,

अन्यानि यानि शास्त्राणि विरुद्धानि महामुने ।
स्वतः प्रमाणभूतेन वेदेन मुनिसत्तमाः ॥

எனவும்,

ततस्ते भ्रंशिताः सर्वे वेदमार्गाच्छुभावहात् ।

எனவும் வருவன வைதிகத் துதி விஷயத்தில் அர்த்தவாத வசன மென்ப துணர்க. அதுவும் ஆத்ம புராணத்தில் வசிட்டன் திலீபன் இவர்களுடைய சம்பாஷிணையில் சித்திரநாம சரிதங் கூறும்வழி அவனுக்குத் தாந்திரிக அனுஷ்டானத்தால் நரகப் பிராப்தி கூறியதுபோலும்: ஆண்டும்,

त्यक्त्वा च वैदिकं कर्म निन्दन्वेद श्रुतिद्विजान् ।

என்பதனல் அது தோன்றியது. அன்றேல் விபூதி ருத்திராக்ஷ தாரியாய்ச் சிவபூசா துரந்தரனன சித்திர நாமனுக்கு நரகப் பிராப்தி யாஞற் சண்டேசுரப் பிள்ளையார் பெற்ற பேறும் பிறவும்.

विन्ध्याद्रौ मृतकःखरोऽपि यदभूद्रुद्राक्षभारासहः
कैलासे शतकल्पमीशसदृशो हा हाऽनवद्ये गणः ॥

என்றற்போல வருவன பிறவும் கூடாஎன்க. இவ்வாறு எல்லாமதங்களும் சேவித்தவர்க்குப் பலங்கொடுக்குமென்பது அந்த அந்த மதவாதிகட்கு முத்தி பேதம் கூறுமாற்றுனு முணரப்படும். அது பௌஷ்கரத்தில்,

दशैव सिद्धयःप्रोक्ता दर्शनान्तरभेदतः ।
भूतमात्राक्षयोश्चैव मनोहङ्कारबुद्धिषु ॥
गुणाव्यक्तनरेष्वेव ज्ञानसिद्ध्या च कर्मतः ।

வேறு இடத்திலும், (552 முதல் 553)

भूततन्मात्रकाक्षाणि मनोऽङ्कारबुद्धयः ॥
गुणोऽव्यक्तनराश्चैव प्राप्य स्थानानि वासिनाम् ।
तत्र तत्रात्मबुध्यैव गम्यन्ते सिद्धयस्ततः ॥

என்றதன் மேலும் பௌஷ்கரத்திலேயே, (554 முதல் 560)

चार्वाका भूतसंसिद्धा यतो देहात्मवादिनः ।
ज्योतिः शास्त्रविदस्तद्वत् प्राप्यं तारापुरं यतः ॥
कौलाश्च स्वात्मवादेन विनाशित्वात्तु भौतिकाः ।
तन्मात्रसिद्धाःस्मार्ताश्च चक्षुरादीन्द्रियं परे ॥
वैशेषिकास्त्वहङ्कारे मनसि न्यायवादिनः ।
बुद्धितत्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः ।
प्राकृताः पाञ्चरात्रास्ते मन्यन्ते प्रबलं हरिम् ॥
प्रधानाक्रान्तपुंसिद्धा वेदान्तज्ञाः प्रकीर्तिताः ।
पुरुषः सर्व इत्येवं मन्यन्ते परिणामिनः ॥
सांख्याः पुरुषसंसिद्धाः कलाक्रान्तः स च स्मृतः ।

என்பது முதலியன வருதல் காண்க. இனி அகச்சமயம் பேத்தத்திற்கு வருமாறு

... ... प्रोच्यन्ते रहसि स्थिताः ।
शक्तितत्वे तदद्वैताः शिवतत्वे परे स्थिताः ॥

எனவும், ஞானரத்நாவளியில்,

पञ्चार्थकालवक्त्राणां मायायामधरे पुटे ।

मुक्तिरुक्ता द्वयोः स्थाने वाकुलक्षेत्ररुद्रयोः ॥
ऊर्ध्वसंपुटके गेहे मुक्तिरुक्ता कपालिनाम् ।

எனவும், சர்வஞானோத்தரத்தில்,

केवलार्थविदःकालं प्राप्नुवन्ति जितेन्द्रियाः ।
परविद्येश्वरस्थानं सोमसिद्धान्तवादिनाम् ॥
पाशुपतास्तु मायायां विद्यायां तु महाव्रताः ।

எனவும், அங்ஙனமே இரௌரவ விருத்தி விவேகத்திலும்.

शक्तितत्वे तदद्वैता मुक्तिमिच्छन्ति बिन्दुजे ।
विद्येश तत्वपूर्वे ये स्वप्रैश्वर्यवादिनः ॥
मन्त्रेशाः शुद्धविद्यायां ये सर्वज्ञमनीश्वरम् ।
मायायां ये स्वसिद्धीनां सङ्क्रान्तगुणमीश्वरम् ॥
ये स्थिता मुक्तिभेदेन शुद्धोऽयं परदक् कृतः ।

என்பது முதலியனவும் பிறவும் விரிவிற் கண்டு கோள்க. இவ்வாறு சுவதந்திர பேதமான காளாமுகாதி ஐவகைச் சமயபேதமும் கூறப்பட்டன என்க.

சைவமத மறுப்பு

154, 155 * * *

"விமலர் தற் புருடாதி வத்திரத்தால்" என்பதும் "திகழ்வாம தேவத்தை" என்பதும் இவ்விரண்டும் அம்மதமும் மறுப்புங் கூறும். அது வருமாறு சர்வ சித்தாந்த விவேகத்தில்.

दृष्टादृष्टार्थसंसिद्धशास्त्रेषु सकलेषु च ।
लोकविश्वासहेतोस्तद् दृष्टार्थप्रतिपादनम् ॥
गारुडं दक्षिणं वामं भूततन्त्रं तथैव च ।
चतुर्विधानि शास्त्राणि पुरुषाद्युदितानि तु ॥
अधःस्रोतांसि शैवानि मूर्तिभिः पुरुषादिभिः ।

विज्ञानकेवलै रुद्रैः प्रेर्यस्तत्पुरुषादिभिः ॥
प्रवर्तितानि तान्येवं कामिकाद्यनुसारतः ।
अस्वतन्त्रतयोक्तानि तेषु गारुड उच्यते ॥
तत्पूरुषब्रह्मरूपः पूजनीयो जगत्पतिः ।
तदुपासनया सिद्धप्रत्यक्षमिदमुच्यते ॥
यन्मन्त्रौषधसंसिद्धं चिकित्साजातमुत्तमम् ।
दक्षिणे घोररूपं तु परं ब्रह्म जगत्पतिः ॥
साधकैः पूजनीयः स्यात् स्वाभीष्टार्थप्रसिद्धये ।
तथा स्वाभीष्टसिध्यर्था लोके शत्रुजयादयः ॥
वामे तु वामदेवःस्यात् पूजनीयो महेश्वरः ।
ततः प्रत्यक्षसिद्धार्था रसबौद्धादयो मताः ॥
सद्योजातं तु यद्ब्रह्म भूततन्त्रे तु पूज्यते ।
भूतप्रेतचिकित्सादिः प्रत्यक्षार्थं इहोच्यते ॥
इत्येवं संग्रहेणोक्ताः शैवास्ते गारुडादयः ।
अन्यथाप्यस्ति चेदेवं तत्र तत्रावधार्यताम् ॥

என வருமாற்ருன் உணர்க. இச் சைவம் பாசுபதாதிபோல, சுவதந்திரபேதம் அல்லவாய்க் காமிகாதிமூலமாய் வருதலின், அவற்றினு முயர்ந்ததாயினும், கீழ் முகத்திலுண்டான தத்புருஷாதி ருத்திரரால் பிரவர்த்திக்கப் படுதலின், இதுவும் ருத்திர பேதத்துள் வைத்துப் பூருவ பக்ஷமாக்கின தென்க. அது காமிகத்தில்:-

सिद्धान्तं गारुडं वामं भूततन्त्रं च दक्षिणम् ।
ऊर्ध्वपूर्वकुबेराप्ययाम्यवक्त्राद्यथाक्रमम् ॥
ईशानवक्त्रादूर्ध्वस्थाज्ज्ञानं यत्कामिकादिकम् ।
दशाष्टादशभेदेन शिवरुद्रावतारकैः ॥

என வருமாற்ருனுணர்க. இதன் மறுப்பு வெளி.

156, 157, 158, 159, 160, 161, 162 "முத்தியும் அப்பதமே" என்பதனுல்........... பதினைந்து பக்கம் ஏட்டில் இல்லையென்று இதன் மூலப்பிரதியில் எழுதியிருக்கிறது.)

... ... ... नानाभेदसमन्वितम् ।
... ... तेषु जायते सर्वयोनिषु ॥
अणुरूपं विना तस्य विभुत्वमिष्यते यदि ।
अवस्थेयं पुमान्ज्ञेयो ललाटे करणादिभिः ॥
ऊर्ध्वाधो वर्तते जीवो जाग्रादिकरणैः सह ।
भूमिकावलये लूको यथा भ्रमति नित्यशः ॥
इत्यतो जीवलोकस्य तदवस्था विरुध्यते ।
माया कर्म च पाशः स्यान्नत्वाणवमलो मतः ।
मायाया मोहकत्वेन विषयास्वादभोगतः ॥
किमन्येनैव पाशेन नानाविधशरीरिणाम् ।
तिरोधायी च पाशः स्यादिति पाशस्त्रिधा मतः ।
शुद्धमाया न बन्धःस्यान्मुक्तिस्थानतया स्मृता ।
लोकधर्मिणि दीक्षादेर्मुक्तिरेव तथैव च ॥
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि ।
इत्येवं दीक्षितानां सदुपायः सफलं श्रुतम् ॥
चर्यापादं दासमार्गं पुत्रमार्गं क्रियां विदुः ।
सहमार्गं योगपादं सन्मार्गं ज्ञानमेव च ॥
केचिचात्र क्रिया योग्यास्तेषां मुक्तिस्तथैव च ।
ज्ञानयोग्यास्तथा चान्ये चर्यायोग्यास्तथापरे ॥
मायातत्वे तु समयी शिवतत्वे तु पुत्रकः ।
साधकश्चेश्वरे तत्वे देशिकस्तु सदाशिवे ॥
इत्येवं कर्मतो मुक्तिर्गाणापत्यमिति स्मृतम् ।
शिवस्य तु विधातुश्च श्रूयते हि तथा वचः ॥
अन्याभिरिह दीक्षाभिर्निर्वाणमवाप्यते ।
गाणापत्यमिदं तावदित्यादि पौष्करादिषु ॥

क्वचित्सायुज्यशब्देन मुक्तिस्तु प्रतिपादिका ।
अनेन मन्त्रपूजाभिः शिवसायुज्यमाप्नुयात् ॥
इत्येवं सहयुक्भावात् शिवेनाणोस्तु तन्मतम् ।
सारूप्यं शिवसायुज्यं तदेवं श्रूयते श्रुतौ ।
शिवसमानतारूपं शिवविग्रहमेव च ॥
इत्यतो निष्कले नैवं तत्र मानविहीनतः ।
गाणापत्यमिदं नित्यं कैवल्यं परमं यथा ॥
अनादिरेव पुरुषः कार्यैश्चैतेन बन्धवान् ।
तन्मात्रपञ्चकैश्चापि सूक्ष्मभूताभिधैः पुनः ॥
ज्ञानकर्मेन्द्रियैःसर्वैस्तथान्तः करणादिभिः ।
प्रवाहानादिसम्बन्धः संसारीत्यभिधीयते ।
अनादेरविनाशित्वान्नित्यता जीवलोकयोः ॥
यथानादेः शिवस्यैवं सा हि मानविनिश्चिता ।
तथा च पक्वनिष्ठानां दीक्षानुष्ठानतो नृणाम् ॥
शिवस्य कृपया तद्वत् शुद्धविग्रहलाभतः ॥
सर्वबन्धैर्विमुक्तानामशुद्धैः कार्यपूर्वकैः ।
नित्यत्वेन स्थितिस्तस्य लोके मुक्तिरितीरिता ॥
तत्रत्यस्त्र्यादिभोगश्च शिवभोग इति स्मृतः ।
शिवसाम्यतया तत्र नासंपूर्णमनोरथः ॥
ईश्वरप्रेर्यतानित्यमिष्ट एव न चान्यतः ।
निर्मलत्वेन चैतन्यसम्भवाच्छिवमुक्तयोः ॥
तदत्र दुःखलेशोऽपि गाणापत्ये न विद्यते ।
तदा पदादेर्नित्यत्वे तत्रासिश्च परा नृणाम् ॥
मुक्तिरेवेति कर्मान्ते पदमुक्तिमते स्मृता ॥

என வருமாற்றான் உணர்க. "இதுவும் மூன்றும்" என்பது மேல் விளங்கும். இக் காணாபத்திய மதம் பரமோக்ஷ நிராச காரிகையுள் :-

महागणो महेशस्य त्वकर्ता सर्ववेद्यवित् ।

என வருமாற்றான் உணர்க.

163 * * *

"தாத மார்க்கம்" என்பது முன்னர் ஒருவாற்றாற் பத முத்தி மதஞ் சரியா சைவம், கிரியா சைவம், யோக சைவம் என மூன்று மென்றவற்றுள், சரியா சைவத்தின் பொதுவியல்பு கூறுகின்றது. ஈண்டுக் கூறும் தாத மார்க்காதி கட்குப் பல பூருவமாக வருவது, பராக்கியத்தில்,

क्रियादि ज्ञानपर्यन्तं शैवमार्गं चतुष्टयम् ।

எனவும், சிவஞான போத சங்கிரகத்தில்,

चर्यापादं दासमार्गं पुत्रमार्गं क्रियां विदुः ।
सहमार्गं योगपादं सन्मार्गं ज्ञानमेव च ॥
एतच्चतुष्टयं मार्गं सालोक्यादिपदप्रदम् ।

எனவும், வேறு இடத்தில்,

सन्मार्गं ज्ञानिनामैक्यं तदात्मशिवयोरपि ।
सायुज्यमिति तत्प्रोक्तं सारूप्यं मुक्तितुल्यता ॥
सामीप्यं मुक्तिसाम्यं स्यात्स्वेच्छाविग्रहधारणात् ।
शिवलोकादिसंप्राप्तिः सालोक्यं मुक्तिरीरिता ॥

எனவும் வரும். இனித் "தாதமார்க்கம்" என்பது முதலியவற்றிற்குக் காமிகம் முதலியவற்றில்,

दासमार्गं शिवोद्यानलिङ्ग बिम्बालयादिकृत् ।
शैवनृत्तनतिस्तोत्रगानकृत् द्रोहिमर्दकम् ॥
क्रियामूर्तेर्महेशस्य आलयेषु समाहितः ।
शनैःसंमार्जनं कुर्यान्मार्जन्या मृदुसूक्ष्मया ॥
अनाहारवशाज्जीर्णा या वन्ध्या क्षीणवत्सला ।
रोगार्ता नवसूता वा त्याज्या गोमयसंग्रहे ।
खसंस्थं गोमयं ग्राह्यं स्थाने वा पतिते शुभे ॥

उपर्यधश्च संत्यज्य प्रत्यग्रं जन्तुवर्जितम् ।
वस्त्रपूतेन तोयेन यः कुर्यादुपलेपनम् ॥
पश्यन्परिहरन्जन्तून् चान्द्रायणफलं लभेत् ॥

எனவும், மேலும் "சிவஞான போத சங்கிரகத்தில்"

आत्मारामोद्भवैः पुष्पैः समादाय शिवस्य तु ।
मालां च ग्रथयित्वा तु यो दद्यात्परमेष्ठिने ॥
स तु रुद्रगणो भूत्वा रुद्रलोके महीयते ।

எனவும், வரும். மேலும்,

यः कुर्यात्तु महेशाय पुष्पारामक्रियाविधिम् ।
स्तोत्रगानादिकं सर्वं यःकुर्याद् दासमार्गकम् ॥
शिवलोकं तु संप्राप्य महेशस्य गणो भवेत् ।

என்பது முதலியனவும் ஆம்;

अत्र स्तोत्रगानादिग्रहणाद्विभूतिरुद्राक्षधारणादिकमपि सिद्धम् ।

அது கந்தபுராணத்தில்,

ब्रह्मणो वदनोत्पन्नं त्रिपुण्ड्रं भस्मनैव तु ।
ललाटे धारयेन्नित्यं तिर्यक् भस्मावकुण्ठनम् ॥

எனவும்,

कण्ठे मूर्ध्न्युपवीते वा कण्ठे करयुगेऽथवा ।
रुद्राक्षं धारयेन्नित्यं भक्त्या परमया युतः ॥

எனவும் கேட்கப்படுதலின். மற்றும் சிவாகமங்களிற் கூறும் சிவ புண்ணியாதிகளும் கண்டு கொள்க. இனிச் சிவதர்மாதிகளிற் கூறுமாறே,

भूतिसाधनसंयुक्तः पूज्यते राजपुत्रवत् ।
गुणवत्पात्रपूजायाः वरं शासनपूजनम् ॥

எனவும்,

अथ ये पुरुषा भक्ता भवन्ति शिवयोगिनः ।
ते विन्दन्ति महाभोगानन्ते योगं च शाङ्करम् ॥
भोगयोगार्थिभिस्तस्मात्संपूज्याः शिवयोगिनः ।
प्रतिश्रयान्नपानेन शय्यावस्त्रासनादिभिः ।
इति यः कुरुते भक्तिं सततं शिवयोगिनाम् ।
स द्वितीये तृतीये वा देहे योगमवाप्नुयात् ॥

எனவும் சிவபக்த சேவை வருமாறு காண்க. பிறவும் "உலகா ளுறுவீர் தொழு மின்" என்றற் றொடக்கத்து உயர்ந்தோர் கூறும் நெறியானுமுணர்க. "இச் சரியை செய்வோர் ஈசனுலகிருப்பர்" (சித்தியார் 271.) என்றதற்கு வருமாறு.

यत्र रुद्रपदे योगो योगो यत्रेश्वरे पदे ।
शिखाच्छेदो न यत्रास्ति दीक्षासमयिपुत्रयोः ॥

எனவும் பிறவும் வருமாற்றுன் உணர்க. பிறவும் அன்ன. 19

164 * * *

"என்னு மிந்தச் சரியையினும்" என்பது அச்சரியையின் அவாந்தர பேதத்துட் சரியையிற் சரியையுஞ் சரியையிற் கிரியையு மாமாறு கூறுகின்றது. அது வருமாறு. ஞானந்த பரிபாஷையில்,

सा चर्या पुनश्चतुर्धा चर्याचर्या चर्याक्रिया चर्यायोग चर्याज्ञानभेदात् तत्राद्या चर्याचर्या नाम अवश्यकदन्तधावनस्नानसन्ध्यावन्दनादिवृत्तिः । तत्र सन्ध्या वन्दनं तु बीजं विना मन्त्रोच्चारणपूर्वकं यथाविधि आचमनविभूतिधारणषडङ्गन्यासमार्जनाघमर्षण तर्पणादि क्रियारूपं । तत्र तर्पणं तु शिवस्य पञ्चाक्षरेण शिवमन्त्रेण गौरीगणपतिस्कन्दगुरुसूर्यमनुष्य भूतादीनां तत्तन्मन्त्रेण विधिवत् कार्यमिति गुरवो वदन्ति ।

எனவும், தத்துவப் பிரகாசத்தில்,

"வீசங்கூ டாமலா சமித்துப் பின்னர்
மிகுமிதயா திகளினு லங்கநியா சத்தை
நேசங்கோ டியற்றிமார்ச் சனமுமரு டணமு
நிறுத்திப்பின் னுசமித்து நியாசஞ் செய்து
வாசங்கோள் சலமூல முக் கா லம்மை
மதயானை யாறுமுகன் குருவிரவி மற்றைப்
பாசங்கோண் முனிமனுக்கள் பூதமே பிதிர்கள்
பகர் முக்காற் செபிசரியை யினிற் சரியை செயற்கே." (50)

எனவும் வரும். மற்ற ஆவசியகாதியனைத்தும் பத்ததியின் விரித்துணர்க. இனிச் சரியையிற் கிரியைக்கு வருமாறு, ஞானேந்த பரி பாஷையில்,

द्वितीया चर्याक्रिया तु प्रागुक्तानुष्ठानपूर्वकं गुरुलिङ्गजङ्गमाराधनादिकम् । तत्र शिवालयसेवा तु द्वात्रिंशदपराधं परिहृत्य विधिवत्कर्तव्या । तदपराधविषये श्रीमत्कामिकादि-श्रुतिः—

देवसत्यप्रदेशे च स्थितौ देवस्य सन्निधौ ।
पुनश्च निर्गमे पुष्टिकरणं शम्भुनन्दिनोः ॥
भुक्तिर्निंग्राह्यधीतिश्च आभिचारक्रिया ततः ।
गोपुरप्रतिमाच्छायालङ्घने स्पर्शने तथा ॥
निर्माल्यलङ्घनस्पर्शौ देवपीठान्तरा गतिः ।
प्रमदाभाषणं तत्र स्पर्शनं रागवीक्षणम् ॥
एकहस्तप्रणामं च एकं चापि प्रदक्षिणम् ।
पातालदर्शनं चैव वृथा सम्भाषणं तथा ॥
असभ्यभाषणं तद्वदसद्यश्रवणं तथा ।
उच्चाटनं स्थितिश्चापि सन्निधावासनं परम् ॥
वृथा हासो वृथा गानं वृथा गत्यागती तथा ।
क्रोधबुद्धि (द्धी) रागबुद्धिस्तथा विग्रहविस्पृशि ॥
असतां भूषणं तद्वत्सतां चाभूषणं तथा ।
सोत्तरीयनमस्कारप्रदक्षिणकृती उभे ॥
देवस्य वामभागे तु नमस्कारक्रियाजपः ।
दुर्देवतोपासनं चेत्यपराधाः प्रकीर्तिताः ॥
अज्ञानतः कृतानेतान्सहते करुणानिधिः ।
स्वमन्त्रमावर्तयतां शतरुद्रीयजापिनाम् ॥
बुद्धिपूर्वं कृतवतां भोगेनैवाघसंक्षयः ।

எனவரும். இவ்வாறு, புண்டரீக புர மான்மியத்தில்

देवालये न कुर्वीत द्यूतं ताम्बूलचर्वणम् ॥
तैलाभ्यङ्गं व्यवायं च वपनं चाङ्गमर्दनम् ।
आचम्यापि च विण्मूत्रे नोत्सृजेच्छ्यावयेच्च न ।
असभ्यभाषां न वदेत् कदाचिद् देवतालये ॥
देवालये न भुञ्जीत न पिबेच्च कदाचन ।
नोच्चासनं भजेद्वापि न खट्वायानमेव च ॥
पैशुन्यानृतकालादीन्विशेषेण विवर्जयेत् ।
देवालये स्थितं तीर्थं दूषयेन्न कदाचन ॥
अत्यन्तमशुचिस्तत्र स्नानं कुर्यान्न कर्हिचित् ।
सोमसूत्रं न लङ्घेत निर्माल्यं च न लङ्घयेत् ॥
पादेन न स्पृशेच्छायां विमानस्य कदाचन ।
बलिपीठस्य देवस्य गच्छेद्वा नान्तरं क्वचित् ॥
एवमादीन् सदा दोषान् वर्जयध्वं हि पुत्रकाः ।

என வரும், அவற்றுள் நிழலேத்தாண்டும் விஷயத்தில்,

छायातिलङ्घने प्राप्ते क्वचित्कुर्यात्प्रदक्षिणम् ।
अन्यत् त्र्यंशं विहायादौ ... संचरेद्बुधः ॥

எனவும், வேறிடத்தில்,

लिङ्गच्छायां तु पीठं च प्रासादं प्रतिमां तु वा ।
उत्सवे बलिकाले च तथैव गुरुसेविते ॥
प्रदक्षिणक्रियाकाले च्छाया दोषो न विद्यते ।

எனவும் வருமாற்ருன் உணர்க. இவ்வாறு தத்துவப் பிரகாசத்திலும் :—

"சரியையினிற் கிரியைதான் றிருக்கோயி லிடையிற்
சாயைமிதி யாதுமியா தானின்மா லியஞ்சேர்
விரிதுகோ முகைகடவாப் பீடமிடைப் போகா
வேல்லேகளிற் கால்நீட்டா விரைவோருகாற் சுழலா
நிரைமுறையே புறமுக்கா லகமோருக்கால் மீள
நேரோருக்கால் வலம்வருவோன் பிரம சாரி
யரிதாக வதியிடத்தே யில்லறத்தோன் வலமு
மாங்கிடமு மாச்சுழல்வ தம்முறைமை யாமே." (54)

"மெல்லென்று மார்ச்சனியாற் கிருமிகள்சா காமல்
மேலலகிட் டடுத்தீன்ற நாளிஞ்ே யாத
லல்லவா மாவின்மயஞ் சுத்தநிலம் விழுந்தா
லதனைநடுப் படவேடுத்த லேற்றல் செய்து
நல்லவா நதியாதி வடித்தெடுத்த நீரா
ஞுளுமெழுக் கிடனந்த வனமுண் டாக்கல்
சொல்லரிய விண்டைதொடை தொடுத்தமைத்தல் பரமாஞ்
சுத்தவே டத்தடிமை தோன்றநிற்ப தாமே." (55)

எனவரும்.

165 * * *

"சரியையினில் யோகந்தான்" என்பது சரியையில் யோகமாமாறு கூறுகின்றது. அது வருமாறு, ஞானரத்ந பரிபாஷையில்:—

अथ तृतीया चर्यायोगस्तु प्रागुक्तक्रमेण सह विधिवत् शिवालयसेवासमये (तु) शिवमाधारशक्त्यादिशुद्धाध्वान्तव्यापकमनलस्वरूपं पद्मरागसन्निभं वा विद्यादेहं ध्यात्वा, प्रदक्षिणकालेऽपि एकवारं पातालभूमावेकवारमाकाशे चैकवारमान्तरं च पदन्यासेन कर्तव्यतया ज्ञेयम् । ध्यानसमयेऽपि रुद्रध्यानं सप्तकोटिमहामन्त्रध्यानं च कर्तव्यम् ।

எனவரும். இவ்வாறு தத்துவப் பிரகாசத்திலும்,

"சரியையினில் யோகந்தான் மந்திரமூர்த் திகளைத்
தனதுளத்திற் கண்டிடுதல் சதாசிவன்றன் மேனி
யெரியுமனல் பதுமரா கத்தினெளி போல
விடைவிடா மேகண்டு வலம்வருகை நேரத்தில்
ஒருகாற்பா தாளமுமா மொருகாற் பூமி
யொருகாலந் தரமென்றே யுன்னிக் கொண்டு
தெரிவரிய வொளியுடனே சித்தங் கூட்டிச்
செய்வதென வாகம நூல்செப்புந் தானே," (129)

எனவரும்.

166 * * *

"அச் சரியையினில் ஞானம்" என்பது சரியையின் ஞானமு மிச்சரியை செய்வோன் பெறும் கதியும் கூறுகின்றது. அது வருமாறு ஞானரத்ந பரிபாஷையில்:—

अथ चतुर्थं चर्याज्ञानं तु प्रागुक्तवत् गुरुलिङ्गजङ्गमाराधनपूर्वकमहिंसाद्यष्टपुष्प पूजनम्। तदष्टपुष्पं तु एवं श्रूयते—योगजे

अहिंसा प्रथमं पुष्पं द्वैतामिन्द्रियनिग्रहम्।
तृतीयं तु दयापुष्पं क्षमा पुष्पं चतुर्थकम्।
ज्ञानपुष्पं तपःपुष्पं ध्यानपुष्पं तु सप्तमम्॥
सत्यमेवाष्टमं पुष्पमेभिस्तुष्यति शङ्करः।

इति एवमनुतिष्ठतः सामान्यसमयिनः शरीरपतने मायातत्त्वे तु समयी रुद्रपदं प्राप्य पुनर्जन्मान्तरेणैव क्रियायामधिकारी भूत्वा गुरोः सकाशादशेषदीक्षां प्राप्य पुत्रमार्गमनुतिष्ठति।
எனவரும். இவ்வாறு தத்துவப்பிரகாசத்திலும்.

"நற்சரியை தனின்ஞான மிறைக்கேட்டு மலரா
நாடிலொன்றுங் கொல்லாமை புலனடக்கல் சாந்தி
முற்படுமெய் யன்புதியா னந்தவமே யுண்மை
முழுதறிவு மிதுபூசை யிதுவு மன்றி
யற்புதமாம் பொருடன்னை யவனடியார் தம்மை
யாலயத்தை யரனெனவே யறுதியிட்டுக் கொண்டு
தற்பணியாய்த் தியானஞ்செய் திடுவதிது தானே
தலையான பொருடன்னி னிலையா மன்றே." (147)

எனவரும்.

167 * * *

"புத்திர மார்க்கம் புகலின்" (சித்தி சூ. 8. பா. 20.) என்பது கிரியை யினது பொதுவியல்பு கூறுகின்றது. இவ்வனைத்தும் கிரியாக்கிரம தியோதிகாதி பத்ததி களில் விளங்கும். ஈண்டு விரிப்பிற் பெருகும்.

168 * * *

"கிரியையினிற் சரியை" என்பது முற்கூறிய சரியைபோலக் கிரியையும் நான்குவகைப்படுமாறு கூறுகின்றது. அவற்றுட் "கிரியையினிற் சரியை நெறி வீசங்கூடக்கிளந்த மனுவாதிகளா னியதி மற்றும் புரிதல்" என்பதற்கு வருமாறு, ஞானரத்ந பரிபாஷையில்.

क्रियाचर्या तु प्रागुक्त (अङ्गलि) सन्ध्यावन्दनमात्रमेव । सन्ध्यावन्दनं तु प्रागुक्त-वत् कर्तव्यम् । तथापि बीजेन सह मन्त्रोच्चारणं विशेषः । तर्पणं गायत्रीपञ्चब्रह्मादिभिः कर्तव्यम् तर्पणं च पद्धत्युक्तप्रकारेण कार्यम् । ध्यानं तु महेश्वरादिध्यानं कर्तव्यम् । எனவரும். தத்துவப் பிரகாசத்தினும்.

" அற்சனையிற் சரியைகா யத்ரிபஞ்சப் பிர்ம
மருண்மூலஞ் சதாசிவமுஞ் சத்திமனோன் மனியுங்
கற்பகநற் சேய்முன்போற் றேவர்சுவா காவாக்
கையிலத் திரமுனிக ணமவிறையி னுலே
போற்பின்மனு வஷட்சிறிய விரற்றலையால் வௌஷட்
பூதங்கள் கைமறித்துப் பிதிர்கள்முதற் கெல்லாம்
நிற்பதுசுட் டாவிரலாற் சுதாவென்று முக்கா
னிகழுசேபம் வேண்டுவது புகழுமுரைப் பதுவே." (51)

எனவரும். அதிற்கிரியை சிவபூசையாதி, அது வருமாறு ஞானுந்த பரிபாஷையில்.

अथ क्रिया । क्रिया तु प्रागुक्तक्रमेण सह विशिष्य सूर्यपूजाशिवपूजाग्निकार्य शिवालयसेवादिवृत्तिः । ध्यानं च सदाशिवादि ध्यानं कर्तव्यम् । अत्र दीक्षान्त्येष्टयादिप्रतिष्ठादि क्रियाजालस्यान्तर्भावः । क्रियाधिक्यात् । तेन तत्कारणभूतगुरुशिष्यशक्तिनिपातादिलक्षणानां च तत्रैवान्तर्भावः ।

என வரும். இவ்வாறு தத்துவப்பிரகாசத்திலும் " கிரியையினிற்கிரியை " என்பது முதல் ஐம்பத்திரண்டு செய்யுளால் உணர்த்தியவாறு விரித்துணர்க.

இனிப் " புகல்யோகம் லயத்தாலு மூலத்தாலுந் தெரிவரிய நிட்டைசாதித்தல் மற்றும் " என்பது கிரியையில் யோகத்தியல்பு கூறுகின்றது. மற்றும் அசபா யோகாதிகளும் கொள்க. இலய யோகமே பிராசாத யோகமும் ஆம். அது மேற் கூறு மாற்ருனுணரவரும். இவ்வாறு வருவனவெல்லாம் யோகபாதத்தின் விரிவிற் கண்டு கொள்க. இவ்வாறு வருவது ஞானுந்த பரிபாஷையில் :—

अथ क्रिया योगस्तु द्विविधः मन्त्रयोगतत्त्वलययोगभेदात् ।
तन्त्रमन्त्रयोगस्तु प्रासादजपादिभेदाद्बहुधा भवति ।

என்பது முதலியவைகளாற் காண்க. இவ்வாறு தத்துவப் பிரகாசத்திலும்;

"ஓங்குகிரி யையில் யோகந் தத்துவங்க ளெல்லாம்
உற்பவித்த வடைவிலே யொடுங்குவதாக் கண்டு
தாங்கரிய வுயிர்சிவன்ற னருகிற் சென்று
சார்வதெனத் தியானித்த லதுவு மன்றி
நீங்கரிய பிராசாதம் பதினு ருகு
நிகழ்மூலா தாரமிலிங் கங்குதத்தி னடுவே
பாங்குசது ரத்தெழுத்து வாசாந்த மிதழ்நால்
பகர்ந்ததனுட் டிரிகோண மங்கிதனி லெழுத்தே." (110)

என்பது முதல் பதினன்கு செய்யுளால் விரித்தவாற்ருன் ஆண்டுணர்க. இனிச் "சிவசத்தி மயமாகச் சேகத்தைப் பார்த்த லூரிய ஞானம்" என்பது கிரியையில் ஞானமாமாறு கூறுகின்றது "பிறவும்" என்றதனுல், அந்தர்யாகாதி மனோவியா பாரோபாசனைகளுங் கோள்க. அது வருமாறு, ஞானுந்த பரிபாஷையில்.

क्रियाज्ञानं तु अन्तर्यागबहिर्यागध्यानादिमनोव्यापारोपासनम् । तत्रान्तर्यागो नाम अष्टाक्षरेण वा प्रणवेन वा विधिवत् हृदयकमलमध्ये विद्यादेहमावाहयित्वा तत्र सदाशिवमावाह्य पूजां कृत्वा मूलाधारे होमं कृत्वा समाधिलाभः । यच्च श्रूयते वातुले—

अन्तर्यागः प्रकर्तव्यस्तस्मिन्नात्मविनिर्मले ।
नाभौ होमं भ्रुवोर्मध्ये भावयेत्सर्वगं शिवम् ॥ எனவும், மேலும்

அதிலேயே

ज्ञानज्योतिर्मयं लिङ्गं शरच्चन्द्रवदुज्वलम् ।
भ्रुवोर्मध्ये स्थितं तत्र मनःप्राणांश्च योजयेत् ॥
तल्लीनसमये योगी चित्तं शून्यं नयेच्छनैः ।
नष्टे चित्ते चिदानन्दं स्वयमुद्योतते परम् ॥
समाधिः कथितो ह्येवमणिमादिगुणालयः ।

எனவும்.

अथवा मनः परद्वारकं कृत्वा तेन देहे शिवालये सम्मार्जनादि कृत्वा आत्माख्य शिवलिङ्गस्य भक्त्याख्यजलाद्यभिषेकद्रव्येण अभिषेकं कृत्वाऽन्तःकरणकल्पितवस्त्रादिभिः सर्वोपचारैःपूजयित्वा प्रागुक्तचर्याज्ञानोचिताहिंसाद्यष्टपुष्पैरर्चनं । तत्क्रियाज्ञानम् ।

அது சிவ பூசாஸ்தவத்தில் கூறப்பட்டுள்ளது:

धारिकाभिधशक्तिबीजमनन्तपङ्कजकुड्मलं पुण्यबोधविरागभूतिपदं विलोमचतुष्टयम् ।
गात्रकं च्छदनद्वयं कमलं सकेसरकर्णिकं शक्तिमण्डलसंयुतमहं नमामि शिवासनम् ॥ 14

पृथ्वीकन्दं कालतत्वान्तनाळं लोकौघं तत्कण्टकं भावसूत्रम् ।
ग्रन्थिग्रन्थि शुद्धविद्यासरोजं विद्ध्येशानारूढपत्राष्टकं च ॥ 15

वामादिशक्तिगतकेसरकर्णिकाढ्यमर्कादिबिम्बसहितं वरयोगपीठम् ।
तत्र स्थितं हृदयमन्त्रगतात्ममन्त्रमूर्तिं च बिन्दुगतमीशमहं नमामि ॥ 16

हृत्पद्माख्यशिवालये मनसिजे तत्कर्णिकाख्ये क्रिया
पीठे ज्ञानमयं विशुद्धमनसा संस्थाप्य नादात्मना ।
लिङ्गं तच्च सुधामयेन पयसा संस्नाप्य सम्यक् पुनः
वैराग्येण च चन्दनेन वसुभिः पुष्पैरहिंसादिभिः ॥ 10

प्रणायामभवेन धूपविधिना चिद्दीपदानेन यः
प्रत्याहारमयेन सोमहविषा सौषुम्नजापेन च ।
तच्चित्ते बहुधारणाभिरमलध्यानोद्भवैर्भूषणै
स्तत्साम्याणुनिवेदनेन यजते धन्यः स एवामलः ॥ 11

चन्द्रस्राविसुधामयेन हविषा नाभिस्थकुण्डेऽनलं
सन्तर्प्येशमयं शिवास्पदगतव्योम्नि स्थिते सर्वगे ।
कन्दोद्भूतशिवाणुनादशिखया वृत्त्यात्मसंवेदनं
शैवे ज्योतिषि यः करोति पुरुषो मुक्तः स एवाक्षयः ॥ 12

इति । अथ बहिर्यागस्तु प्रपञ्चकारमदृश्यं सर्वातीताकारम् दृश्यमात्मरूपं सर्वं शिवाकारतया दृष्ट्वा यजनम्

संभोगविषयः शक्तिः शक्तो भोक्तेति निश्चयात् ।
जगत्सर्वं तदाकारमिति केचिन्मनीषिणः ।
चिद्रूपं तु शिवं शक्तिर्जडरूपेति केचन ॥
इत्येवं भावनायुक्तः मुक्तः संसारसागरात् ।

என வருமாற்றான் உணர்க. இனி "இந்நான்கு முடையோருருவர் சுத்த வித்தையினில் உருத்திர சாருபம்" என்பதற்கு வருமாறு, ஷட்சகஸ்ரீ காந்தரத்தில்

मायातत्वे तु समयी शिवतत्वे तु पुत्रकः ।

என வருமாற்றுன் உணர்க. ஈண்டு மாயை பிரகிருதி, சிவ தத்துவம் சுத்த வித்தை என்க; மேலே,

साधकस्त्वीश्वरे तत्वे देशिकस्तु सदाशिवे

என வருதலின்.

169 * * *

"ளாருறு" மென்பது முற்கூறிய லயயோகமும் பிராசாத யோகமும் ஆமாறு கூறுகின்றது. அவற்றுள், லயயோகத்திற்கு வருமாறு :-

गन्धे भूः सलिलं रसे हुतवहो रूपे मरुत्स्पर्शने
शब्दे स्यात्खमहंकृतौ पुनरिमास्तन्मात्रकास्तामसे ।
कर्माक्षाणि च राजसे सह मनोबुद्धीन्द्रियैः सात्विके
बुद्धौ तच्च गुणेषु सा गुणगणोऽव्यक्ते लयं गच्छति ॥
तद्रागविद्ये च कलां प्रयान्ति पुंस्त्वं च कालो नियतिः कला च ।
मायां च विघ्नेशमसौ सदेशं स शक्तिमेषा शिवमेष बिन्दुम् ॥

என வருமாற்றுன், லய யோகமாமாறு உணர்க. பிராசாதயோகம் மேல் கூறுதும்.

170 * * *

"சிவனோடு கூடும்" என்பது பிராசாதகலைகள் பதினாறும் இவைகளென்கின்றது. ஈண்டுச் சிவனென்றது ஹகாரத்தை. சுத்தாக்கியையில் அது சொல்லப்பட்டிருக்கிறதாவது :-

नादं गुह्यं परो जीवो देही भूतं च पञ्चमम् ।
सान्ततत्वान्तभूतान्तं शिवान्तं शून्यमव्ययम् ॥ इति ।

இந்த ஹகாரம் அகாரத்தோடும் கூடி ஆகாசமும் வாயுவும் போற் பிரியாது நிற்குமாகலின் இரண்டிற்கும் பேதமின்மையின் அகாரமு மதுவேயாம். அது கூறப்பட்டுள்ளது,

अकारश्च हकारश्च द्वावेतावेकसंस्थितौ ।
विभक्तिर्नैव विद्येत मारुताम्बरयोरिव ॥

என்று. இவ்வாறு பதினாறு கலையுமாவன :-

अकारश्च उकारश्च मकारो बिन्दुरेव च ।
अर्धचन्द्रनिरोधी च नादो नादान्त एव च ॥
शक्तिश्च व्यापिनी चैव व्योमरूपा त्वनन्तका ।
अनाथाऽनाश्रिता चैव समना चोन्मना तथा ॥
समनान्तं पाशजालमुन्मन्यन्ते परःशिवः ।

என வரும். இவற்றுள், ஏழொழித்து நவகலையாயும், நான்கொழித்துப் பன்னிரண்டு கலையாயும் வருமாறு; சித்தாந்த ரகசியத்தில் :-

सान्तं मेघा च षष्ठं च भान्तं बिन्द्वर्धचन्द्रके ।
नादस्तदूर्ध्वगा शक्तिरुन्मना नवधा शिवः ॥
एवं नव कलाः प्रोक्ता रविभेदस्तथैव च ।
अकारश्च उकारश्च मकारो बिन्दुरेव च ॥
अर्धचन्द्रनिरोधी च नादो नादान्त एव च ।
शक्तिश्च व्यापिनी चैव समना चोन्मनास्तथा ॥
समनान्तं पाशजालमुन्मन्यन्ते परःशिवः ।
कलार्कसंख्ययैवोक्ता कला चन्द्रस्तथोच्यते ॥
अकारश्च उकारश्च इति पूर्वमुदाहृतम् ।

तत्रैव

समना व्यापिकान्तस्थे व्योमाज्ञानन्तसंज्ञिते ॥
अनाथाऽनाश्रितेत्येवं ज्ञेयो द्व्यष्टकलः शिवः ।

எனவும் பிறவும் வருமாற்றான் உணர்க.

"பேறு வியோமரூபாதி" என்பது அப்பதின்று கலைக்கு மேலாயுஞ் சிலகலைகள் பிறநூல் கூறுமாறே கூறலுமா மென்கிறது. அவற்றின் மேலும் கூறுவன வேட்டுக் கலைகள் என்க. அவை [1]சமனாந்தம் [2]உன்மனாந்தம் [3]பரை [4]பரையந்தம் [5]சிவம் [6]சிவாந்தம் [7]சரணம் [8]சரணாந்தம் என்பன. இவற்றுட் சில குறைந்து மேறியும் வரும். அது பிராசாத விளக்கத்தில் :-

"மன்னுசம னாந்தமுன் மனையனந்த மேவு
......பரை சிவஞ்சரண மவற்றி னந்த
மென்னுமிரு நான்கிவற்றுள் முன்னீ ரந்தம்
இயைசமனை யுன்மனையு ளடக்கி மற்றுப்
பின்னிகழும் பரையதனி லப்ப ராந்தம்
பேசுசர ணத்திலந்தச் சரணாந்த மடக்கித்
துன்னியநாற் கலையோருமுன் மொழியீ ரெட்டுஞ்
சொல்லவரு கலைகளிரு பஃதா மென்ப
ஸ்ரீன்னுபிர ணவகலையு மிவற்ற டங்கு மேனு
முரைதருமுப் பத்தேட்டா யுரைப்பனவும் விரிப்பாம்."

என வரும். இவ்வாறு ஞானசித்தியிலும் :-

प्रासादस्य कला एताश्चतुर्विंशत्तथैव च ।
द्वाविंशदेकविंशच्च विंशदष्टादशं तथा ॥
षोडशः पञ्चदशं च द्वादशो दशमो नव ।
अष्टमं पञ्चमं चैव कलाभेद इहोच्यते ॥
अकारश्च उकारश्च मकारो बिन्दुरेव च ।
अर्धचन्द्रनिरोधी च नादो नादान्त एव च ॥
शक्तिश्च व्यापिनी चैव व्योमरूपा तथैव च ।
अनन्ता च तथाऽनाथाऽनाश्रिता समना तथा ॥
उन्मना च तदन्तश्च परा शक्तिः परान्तकः ।
परशिवस्तदन्तश्च शाम्भवं गुरुपादुका ॥
शिवः शाम्भव एव स्याद् द्वाविंशद्भेद उच्यते ।
शिवान्तान्तैकविंशच्च शिवान्तो विंशत्कला तथा ॥
परान्ताष्टादश प्रोक्ता उन्मन्यन्ते तु षोडश ।
समनान्ते पञ्चदशः विना शैवं चतुष्कलाः ॥
कला द्वादश एवोक्तास्तत्प्रासादकलाः स्मृताः ।

எனவும் பிறவும் வருமாற்ருன் உணர்க.

172 * * *

"அறிய வருமுயிர்" என்பது பிராசாத யோக மாமாறு கூறுகின்றது. இதன் பொருளை ஈண்டு உரைப்பிற் பெருகும். பிராசாத விளக்கத்தில் விரித்துரைத்தாம். ஆண்டுணர்ந்து கொள்க.

173, 174, 175 * * *

"கிரியா சைவம்" என்பது முதற் "சுத்த சைவம்" என்பதீருன மூன்று பாடலும் கிரியா சைவ மத மைந்து மாமாறு கூறுகின்றது. அது வருமாறு, வாதுளத்தில் :—

शैवं चतुर्विधं ज्ञेयं समासात्शृणु षण्मुख ।
सामान्यं मिश्रकं चैव शुद्धं वीरं यथाक्रमम् ॥
तत्रादौ संप्रवक्ष्यामि शैवसामान्यलक्षणम् ।
शिवलिङ्गं यदा पश्येत्तदा कुर्यात्समर्चनम् ॥
प्रदक्षिणं वा प्रणतिं दर्शनं चात्र कारयेत् ।
भस्मधारणमात्रेण शुद्धो भवति सर्वदा ॥
शिवकीर्तिस्तदालाभे प्रीतिमान्शिवभक्तके ।
एतेषां नियतिर्नास्ति यथा लब्धं समाचरेत् ॥
सामान्यलक्षणं प्रोक्तं वक्ष्ये मिश्रस्य लक्षणम् ।
शैवं च वैष्णवं शाक्तं कौमारं गाणपत्यकम् ॥
सौरं चाखिलदैवत्यपूजनं च समाचरेत् ।
एतेषूक्तेषु सर्वेषु तत्तन्मन्त्रेषु मिश्रकान् ॥
समभक्तिसमायुक्तःसर्वाल्लिङ्गे तु पूजयेत् ।
मिश्रशैवमिति प्रोक्तं शुद्धशैवं ततः शृणु ॥
शुद्धत्वाच्छिवमुद्दिष्टं शिवाज्ञातं हि शैवकम् ।
शुद्धशैवसमायोगात् शुद्धशैवमिति स्मृतम् ॥
शिवेनोत्पद्यते शैवं तस्माज्जाताः शिवद्विजाः ।

शिवद्विजास्तु विप्रेन्द्रा आदिशैवाः प्रकीर्तिताः ॥
[1] कौशिकःकाश्यपश्चैव भारद्वाजोऽथ गौतमः ।
[2] अगस्त्यश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः ॥
तेषां वंशे तु जातास्ते शिवविप्रा इति स्मृताः ।
पुनर्दीक्षां न चार्हन्ति कर्तव्या चेत्तु निष्फला ॥
कामिकादिषु तन्त्रेषु अष्टाविंशतिषु क्रमात् ।
वेदशास्त्रादिसर्वेषु कृताभ्यासः शिवव्रती ॥
कर्षणादि प्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तकम् ।
उत्सवात्प्रायश्चित्तान्तं ज्ञात्वा सर्वं समाचरेत् ॥
मन्त्रयन्त्रक्रियामुद्रान्यासावाहनकादिभिः ।
उपचारैर्बहुविधैर्लिङ्गं लिङ्गासने यजेत् ॥
प्रासादं प्रणवं हंसं व्योमव्यापि शिवाक्षरम् ।
अघोरं दक्षिणामूर्तिं मृत्युञ्जयमतः परम् ॥
श्रीरुद्रं चैव परमं श्रीमत्पञ्चाक्षरं परम् ।
अघोरास्त्रं शिवास्त्रं च तथा पाशुपतास्त्रकम् ॥
द्वादशैते महामन्त्राः शिवमन्त्रोत्तमोत्तमाः ।
अस्त्रमुद्रा वक्त्रमुद्रा महामुद्रा ततः परम् ॥
शोधनाख्या महामुद्रा तथा संहृतिमुद्रिका ।
मुद्रा पञ्चमुखी चैव तथा सुरभिमुद्रिका ॥
एवमष्टविधं प्रोक्तं मुद्रासामान्यलक्षणम् ।
आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते ॥
दत्ते च गुरुणा लिङ्गे स्थण्डिले स्वयमात्मनि ।
आत्मार्थमिदमाख्यातं परार्थं तु ततःशृणु ॥

[1] कौशिकः काश्यपश्चैव भारद्वाजोऽत्रिरेव च ।
[2] गौतमश्चैव पञ्चैते पञ्चवक्त्रेषु दीक्षिताः ॥ —इति पाठान्तरम्

ग्रामादौ स्थापिते लिङ्गे यद्वा देवादिनिर्मिते ।
परार्थमिति विज्ञेयं सर्वप्राणिहितावहम् ॥
शिवद्विजेन कर्तव्या द्विधा पूजेति चोदिता ।
अन्येषां स्वार्थयजनं न कुर्यात्तु परार्थकम् ॥
मोहाल्लोभाच्च कुर्वीत राजराष्ट्रस्य दुःस्थितिः ।
शिवावरणदेवांश्च सर्वान्संपूजयेदिह ॥
पृथक्स्थानस्थितान्सर्वान् पूजयेदन्यदेवकान् ।
मन्त्रपिण्डे हृदम्भोजे वासमन्त्रस्य भावतः ॥
आवाहनादि संयुक्तं लिङ्गे पूजादिकं चरेत् ।
मन्त्रलिङ्गं शरीरं स्यात्स एव परमः शिवः ॥
शुद्धशैवमिदं प्रोक्तं वीरशैवमथोच्यते ।

எனவும், வேறிடத்தில் ஆதிசைவர் விஷயத்தில் :-

संन्यासमुपवासं च व्रतं च यज्ञकर्म च ।
तीर्थयात्रानुगमनं शैवाः पञ्च विवर्जयेत् ॥

எனவும், கேட்கப்படுகிறது. சர்வ சித்தாந்த விவேகத்தில் விரிவில் உணர்ந்து கொள்க. வீர சைவர் விஷயத்தில் சுத்தாக்கியையில் :-

शुद्धशैवमिदं प्रोक्तं वीरशैवमतः शृणु ।
सर्वेषामपि शैवानां वीरशैवमिहोत्तमम् ॥
तस्मात्सर्वप्रयत्नेन वीरमाहेश्वरं शुभम् ।
सुलभा देवपूजा च सुलभं च क्रियावहम् ॥
ज्ञानगम्यं रहस्यं च कैवल्यपदकारणम् ।
वीरशैवमिति ज्ञेयमेतल्लक्षणमुच्यते ॥
एक एवायमेवेति सर्वस्मिन्जगतीति यः ।
विशिष्टो वीर्यते यस्मात् वीर इत्यभिधीयते ॥
शिवेन सह सम्बन्धाच्छैवमित्याहृतं बुधैः ।

उभयोः संपुटीभावाद्वीरशैवमिति स्मृतम् ॥
वीरमाहेश्वरं तन्त्रं ज्ञातव्यं त्रिविधं सुत ।
सामान्यं च विशेषं च निराहारं क्रमाद्भवेत् ॥
तत्रादौ संप्रवक्ष्यामि वीरसामान्यलक्षणम् ।
हस्तमस्तकसंयोगाद्भूतिपट्टस्य धारणात् ॥
शिवदेहीति विज्ञेयः सर्वपापैः प्रमुच्यते ।
गुरुणा दत्तलिङ्गं तु शिवमन्त्रेण धारयेत् ॥
मूर्ध्नि कण्ठे भुजे हस्ते हृत्स्थले नाभिमण्डले ।
एतेषामेकदेशे तु धारयेच्छिवलिङ्गकम् ॥
एककालं द्विकालं वा त्रिकालं वा समर्चयेत् ।
गुरौ लिङ्गे सदा भक्तिं कारयेद्भसिते तथा ॥
वीरसामान्यमाख्यातं विशेषं च ततः शृणु ।
शिवकुम्भं समासाद्य स्थण्डिलेऽपि च पूजयेत् ॥
शिवकुम्भे शिवं पूज्य भक्त्यानम्य तु तोषयेत् ॥
शेषं दीक्षोक्तवत्कृत्वा मलपाशादिमोचनम् ॥
गुरुः शिष्यं समालोक्य तत्वदेहं विचिन्तयेत् ।
शिवकुम्भस्थतोयेन अभिषिञ्चेच्छिवाणुना ॥
नादबिन्दुकला नीत्वा तत्तत्स्थानेषु विन्यसेत् ।
षट्चक्रं च षडङ्गं च षडध्वानं षडानन ॥
तत्तत्स्थानेषु विन्यस्य पञ्च ब्रह्म न्यसेत् ततः ।
मूलमन्त्रमुपदिशेत्ततो लिङ्गं प्रदापयेत् ॥
शेषाणि तत्र कार्याणि दीक्षोक्तप्रक्रमाच्चरेत् ।
देहप्राणौ समायोज्य प्राणलिङ्गे प्रकल्पयेत् ॥
तस्माद्विना भावयोगादैक्यं चैव प्रकल्पयेत् ।
अन्यद्दृष्टिनिपातं च यद् द्रव्यं परिवर्जयेत् ॥
शुद्धद्रव्यं समासाद्य लिङ्गानां च समर्पणम् ।

इति व्रतसमायुक्तो वीरशैवो विशिष्यते ॥
विशेषशैवमाख्यातं निराहारं ततः शृणु ।
सर्वसंसारसौख्यानि त्यक्त्वा चित्तं शिवे लयेत् ।
दण्डकौपीनकाषायजटावल्कलधारकः ॥
मुण्डी वा शिवचिह्नानि धारयेदजिनादिकम् ।
भिक्षाशनमिताहारः सुखसंसारवर्जितः ॥
निराहारीति विज्ञेयः स एव परमः शिवः ।
वीरमाहेश्वराणां च सामान्यव्रतमुच्यते ॥
पूर्वोक्तशिवमुद्रासु तद्धारिषु च सर्वतः ।
अर्थतः प्राणतो ज्ञेयं भक्तिं कुर्याद् दृढां सुत ॥
पापं तेषु न कर्तव्यं स्वयमेव कदाचन ।
कृते परेण चेत्पापे नोपेक्षेत्करणैस्त्रिभिः ॥
बलवाञ्शिक्षयेत्तत्र दुर्बलश्चेद्व्रजेत्ततः ।
करणैस्तु विहीनश्चेद्बुद्धिं तत्र विनिक्षिपेत् ॥
स्वीकरोति यदा लिङ्गं गुरुणा दीक्षयाणुना ।
तदाप्रभृति लिङ्गैक्यमविनाभावयोगतः ॥
देहं प्राणेऽनु संस्थाप्य प्राणलिङ्गेन निक्षिपेत् ।
प्राणेन निक्षिपेल्लिङ्गं पृथक्भावं न कारयेत् ॥
वीरशैवक्रमः प्रोक्तः प्रायश्चित्तमथोच्यते ।

என்பன முதலியன. இவ்வாறு வீரதந்திராதிகளின் விரிவுணர்க.

இனி ஊர்த்துவ சைவக் கிரமம் வருமாறு. “அத்தகு நல் லூர்த்வசைவ மகுடாதி நெறியி னருஞ் சதா சிவத்துச்சி யானைப்போல முத்திவரு....நடனங்களுண வேண்டின் முயல்வா பிராசாத நெறியோகந்தானே” என்பது. ஈண்டு மகுடாதி என்றது விமலாதிகளும் கோடற்கு. இவை இவர்க்குச் சிறந்த நூலேன்பது வீரசைவாதிகட்கு வீராகம முதலாவன போலக் கொள்க. இவர் இலக்ஷணம், மகுடத்தில்,

गोत्रं चैव तथा सूत्रं गोचरं वृक्ष एव च ।
रत्नं च शैवभेदं च तत्वं कालश्च मूर्तिकम् ॥
शान्तिंच दशधा द्यूर्ध्वशैवनामादि लक्षणम् ।
कौशिकः काश्यपश्चैव भारद्वाजोऽथ जैमिनिः ॥
अगस्त्यो गौतमो वसिष्ठः पराशरश्च रोमशः ।
इत्येते ऋषयः प्रोक्ता अथ सूत्रं च कथ्यते ॥
शिवसूत्रं नादसूत्रं शक्तिश्च ब्रह्मसूत्रकम् ।
बिन्दुसूत्रं विष्णुसूत्रं पश्चाद्वायव्यसूत्रकम् ॥
सोमसूत्रं महासूत्रं नवसूत्राण्यमूनि वै ।
शिवः शिखा शिवानन्द ज्योत्स्ना सावित्रि सद्गुणाः ॥
व्योमश्च व्यापकश्चोर्ध्वो गोचरा नवधा स्मृताः ।
कल्पो बिल्वःशमी चैव वटवृक्षश्च चम्पकम् ॥
अश्वत्थःप्लवपुन्नागौ चन्दनो नव पादपाः ।
माणिक्यं मौक्तिकं चैव पुष्परागं च कीलकम् ॥
वैडूर्यं चैव गोमेधं गारुडं च प्रवालकम् ।
स्फटिकं चैव रत्नानि नवधा कीर्तितानि च ॥
ऊर्ध्वशैवं तु प्रथममनादिस्तु द्वितीयकम् ।
आदिशैवं तृतीयं स्यादनुशैवं चतुर्थकम् ॥
अवान्तरं पञ्चमं च मिश्रशैवं तु षष्ठकम् ।
सप्तमं भेदशैवं स्यादष्टमं गुणशैवकम् ॥
आज्ञाशैवं तु नवमं शैवानि नवधा क्रमात् ।
शिवतत्त्वं वह्नितत्त्वं शक्तिज्ञानलयं ततः ॥
निर्गुणो भेदतत्त्वं च आत्मविद्याशिवात्मकम् ॥
प्रोक्तानि नव तत्वानि कालान्नव शृणु क्रमात् ॥
विधाता सृष्टिकाले तु स्थितिकाले तु केशवः ।
संहारकाले रुद्रस्तु भोगकाले महेश्वरः ॥

योगकाले तु सादाख्यो ज्ञानकाले तु बिन्दुकः ।
ध्वनिकाले तु नादात्मा आत्मकाले तु शक्तिकम् ॥
शिवकाले विशेषं तु ईशानादुन्नतक्रमात् ।
शिवमूर्तिःशक्तिमूर्तिर्नादात्मा बिन्दुमूर्तिकः ॥
सदाशिवमहेशानरुद्रकेशववेधसाम् ।
मूर्तयो नवधा प्रोक्ताः शक्तीरपि ततः शृणु ॥
आदिशक्तिः क्रियाशक्तिर्ज्योतिःशक्तिर्गुणात्मिका ।
ज्ञानशक्तिः क्रियाशक्तिः योगाख्या सांख्यशक्तिका ॥
भेदाधारात्मिका शक्तिः शक्तयो नवधा स्मृताः ।
नामादिभेदः संप्रोक्तो द्वारवर्णक्रमं शृणु ॥

எனவரும். இவ்விலக்கணம் ஆதிசைவர்க்கு அகோர சிவாசாரியர் பத்ததியாதி களிற் கூறியதூஉம், மகாசைவர்க்குக் காரணாதிகளிற் கூறியதூஉமன்றி வேறு பட்டு வருதலின், ஊர்த்துவ சைவரிலக்கணம். வேறுயவர்களும், பரார்த்தமாத் மார்த்த மிரண்டும் பூசித்தலானும், யாகாதிகளாகிய வைதிக கிரியாபரராய் இருத் தலானும் அவ் வாதி சைவர் மகா சைவரின் வேறுபட்டு வருபவர் என்க. இவர் சிறப்புச், சிதம்பர மான்யத்தில்,

शास्त्राब्धिशशिनो नन्दिन् आगमारामकोकिलाः ।
श्रुत्यालयाः सदा ते च षट्कर्माचरणे रताः ॥

எனவும்,

अथ तत्समये सम्यक् संग्रामे मुनिपुङ्गवाः ।
कृत्तिकाश्विनिके ऋक्षे त्रिसहस्र द्विजातयः ॥
संभूय सहिताः सर्वे वेदोक्तविधिना तदा ।
देवतावाहनं चक्रुः परमेशस्य सन्निधौ ॥

எனவும் பிறவும் வருமாற்றான் உணர்க. இவர் வைதிக யாகம் பண்ணுவதும் அதிலேயே.

वेदेषु ते गणाधीश सर्वे सम्भूय द्वादशम् ।
सदक्षिणैर्महामन्त्रैस्तर्पयित्वा सुरान्सदा ॥

எனவும் "பறப்பைப் படுத்தெங்கும் பசுவேட்டெரியோம்புஞ் சிறப்பர் வாழ் தில்லைச் சிற்றம்பலம்" (சம்பந்தர் தேவாரம்) எனவும் வருமாற்ருன் உணர்க. இவர் நிவாஸஸ்தானம்,

कैलासाख्यो मठः प्रोक्तः पलाशश्च द्वितीयकः ।
वलाहकस्तृतीयः स्यात्कल्पग्रामश्चतुर्थकः ॥
बदरिका पञ्चमी स्याद्देवदारुवनं ततः ।
कदम्बः सप्तमः शङ्ख उत्तरारण्यकं ततः ।
दक्षिणारण्यकं तस्मात् गोविन्दाख्यमतः परम् ॥

என அகோரசிவாசாரியர் "சைவாசாரியர் வாசஸ்தான" மென்றவற்றுள் தக்ஷிணாரண்ணியமேன்க. அது தில்வாரண்ணியமாம். அன்றி யவைகள் போல தில்வாரண்ணியமும் சைவர் நிவாஸஸ்தானங்களுள் ஒன்ருய் வேருமெனினுமாம்

இவர்க்குத் தந்திரம் மகுடாதி என்றது, ஆகமமான காமிகாதி இருபத்தேட்டும் தக்ஷிணவாம மிச்சிரபேதத்தால் மூவகைப்படும். அவற்றுள் மகுடாதி தக்ஷிண தந்திரமாகலின் அவ்வழி யொழுகுவர் என்றறிவித்தற்கு. அது மகுடத்தில்:-

शैवं पाशुपतं सोमं लाकुलं तु चतुर्विधम् ।
तेषु श्रेष्ठतमं शैवमूर्ध्वस्रोतः समुद्भवम् ॥
ततस्तु द्विविधं शैवं रौद्रं सौम्यमिति स्मृतम् ।
सौम्यं च त्रिविधं वामं दक्षिणं चैव मिश्रकम् ॥
आचारो वेदविहितः दक्षिणागम उच्यते ।
विपरीतं तु वामं स्यात् द्वयोर्मिश्रं तु सङ्गमम् ॥

எனவும், மேலும் அதிலேயே,

वेदसारमिदं तन्त्रं तस्माद्वैदिकमाचरेत् ।
वेदान्तार्थमयं ज्ञानं सिद्धान्तं परमं सुखम् ।

எனவும் சொல்லப்பட்டிருக்கிறது, இந்த "ஊர்த்துவ சைவ சித்தாந்தம்," வருமாறு. ஞானந்த பரிபாஷையில்,

ऊर्ध्वशैवस्य सिद्धान्तः शुद्धशैवोक्तवर्त्मना ।

सर्वमभ्युपगम्याथ द्वैतसिद्धान्तपूर्वकम् ॥
पत्यादिलक्षणे तत्र भेदोऽस्त्येव क्वचित् क्वचित् ।
यस्य सदाशिवो देव आसनं स्यान्नटेशितुः ॥
स एव पतिरित्युक्तो नवतत्वात्परो यथा ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥
परो बिन्दुः परो नादः परा शक्तिः परः शिवः ।
एतानि नव तत्वानि लीयन्ते यत्र वस्तुनि ॥
तद्वस्तु द्वादशान्तस्थं परमानन्दताण्डवम् ।
तस्मात्ताण्डवमूर्तेस्तु परं किंचिन्नहि ध्रुवम् ॥
इति सञ्चिन्त्य मतिमान् अन्यत्सर्वं विहाय च ।
भावयेद्भोगमोक्षार्थं मूर्तिं ताण्डवतत्पराम् ॥
ज्योतीरूपं नटन्नित्यं सृष्टिस्थित्यन्तकारणम् ।
नवतत्वमयं स्थानं सर्वसंपत्करं परम् ॥
इत्यादि मकुटे किञ्च तथा श्रीवातुलोत्तरे ।
शिवः शक्तिर्नादबिन्दू सादाख्येश्वररुद्रकाः ॥
विष्णुः पितामहश्चैवमेकैकोद्भवमुच्यते ।
नवभेदस्थितो देवो नवतत्त्वात्परः शिवः ॥
इत्यादि सर्वसिद्धान्तविवेके श्रूयते स्फुटम् ।

ननु अत्र नवतत्वात्परः शिवः लयशिव एव पुनः कोवात्र ताण्डवाकरः शिव इति चेत् । सत्यम् । तस्य शिवस्याधिकारावस्थायां सदाशिववत् भोगावस्थायां ताण्डवाकारं सम्भवतीति श्रूयते। यतः । यथा श्रीमकुटे ।

बिन्दुमात्रस्वरूपेण शिवसृष्टिक्रमं शृणु ॥
बिन्दुमध्ये गतो नादो नादमध्ये गतो ध्वनिः ।
ध्वनिमध्ये गतं शान्तं शान्त्यतीतं परात्परम् ॥
शिवं परात्परं ब्रह्म अप्रमेयमानिन्दितम् ।
अनौपम्यं च सूक्ष्मं च नित्यं सर्वगतं प्रभुम् ॥

शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम् ।
बृहत्वाद्ब्रह्मणत्वाच्च ब्रह्म इत्यभिधीयते ॥
प्रमाणव्यतिरेकत्वादप्रमेयं नटेश्वरम् ।
मलत्वान्निन्दितं ज्ञेयममलत्वादनिन्दितम् ॥
अनौपम्यमसादृश्याद् दक्षिणामुखमाश्रितम् ।
व्योमातीतात्परं सूक्ष्मं नित्यं कारणशून्यतः ॥
व्यापित्वात्सर्वगं प्रोक्तं स्वामित्वात्प्रभुरुच्यते ।
पालनार्थं सभावासं दक्षिणेश्वरमद्भुतम् ॥
सदानृत्तं महाज्योतिरम्बावल्लभमीश्वरम् ।
आनन्दरूपमध्यस्थं शिवं परमकारणम् ॥
सृष्ट्यर्थं लोकरक्षार्थं लोकस्योत्पत्तिकारणम् ।
साधकानां हितार्थं च संग्रहेत्स्वेच्छया तनुम् ॥
ततः स च त्रिधा प्रोक्तो निष्कलं तु तथा पुनः ।
सकळं निष्कळं चैव सकळं च यथाक्रमम् ।
निष्कळं तु चतुर्भेदं सकळं च तथा भवेत् ।
सकळनिष्कळं त्वेकं नवधा कीर्तितं क्रमात् ॥
शिवतत्वात्सहस्रांशात् शान्तिनामसमुद्भवम् ।
शान्तिः शान्तिकरं प्राहुः तस्य पर्यायवाचकः ॥
तस्माच्चैव सहस्रांशात् शक्ति.नामसमुद्भवः ।
शक्तिश्चैव तु विद्या च पर्यायस्तदुदाहृतः ।
तस्माच्चैव सहस्रांशान्नादमूर्तिसमुद्भवः ॥
नादस्तस्य प्रतिष्ठा च पर्याया इति कीर्तिताः ।
तस्माच्चैव सहस्रांशाद्बिन्दुतत्वसमुद्भवः ॥
बिन्दुश्चैव निवृत्तिश्च पर्यायस्तत्र वाचकः ।
परं भावं समालम्ब्य सदा ताण्डवसद्गुणैः ॥
अव्यक्तानि स्वरूपाणि निर्लक्ष्या निष्क्रियास्तथा ।

चतुर्धा निष्कलं त्वेकं शिवतत्त्वमिहोच्यते ॥
ध्यानपूजानिरूपस्थं निष्कळं तु महेश्वरः ।
इत्येवं निष्कळं प्रोक्तं परं भावमिति स्मृतम् ॥
तस्माद्दशैकभागेन सादाख्यस्य समुद्भवः ।
लिङ्गपीठप्रकारेण सादाख्यतत्त्वलक्षणम् ॥
तत्सादाख्यप्रभावं तु वर्णितुं नैव शक्यते ।
सकळं निष्कळं प्रोक्तं सकळं च ततः शृणु ॥
मूर्तयस्त्वीश्वराद्याश्च सकळा इति कीर्तिताः ।
यद्वत्सदाशिवं प्रोक्तं तद्वदीश्वर उच्यते ॥
ब्रह्माद्यावरणं चैव पूर्ववत्परिकल्पयेत् ।
काष्ठलोहशिलामूर्तीः प्रतिमास्तु प्रकल्पयेत् ॥
बिन्दुतत्त्वस्थितं शम्भुं सर्वलक्षणसंयुतम् ।
लिङ्गस्य गोलकं विद्यात् सकळं तु महेश्वरः ॥
लिङ्गपूजावसाने तु पूजयेदीश्वरं क्रमात् ।
ईश्वरस्य सहस्रांशात् रुद्रस्योद्भव उच्यते ॥
ईश्वरस्य तु कोटयंशाद्विद्धि विष्णोः समुद्भवम् ।

इत्यादि बहुधा श्रूयते । अत्र ग्रन्थविस्तरभयान्न लिख्यते । अत्र पालनार्थं सभावासमिति पालन शब्देन भोगावस्थोच्यते । यथा श्रूयते श्रीमत्पौष्करे :—

तत्त्वं तदेव सादाख्यं न शिवाद्वस्तुतो भिदा ।
भोगस्तत्पालनात्मैव नाध्यासस्तदसम्भवात् ॥

इति । तेन भोगावस्थितः शिव एव ... स्फुटं ज्ञायते । अत एव लयशिवस्य नृत्तमूर्तेश्चाभेदेन

प्रमाणव्यतिरिक्तत्वादप्रमेयं नटेश्वरम् ।
अनौपम्यमसादृश्याद् दक्षिणामुखमाश्रितम् ॥

इत्यादि लयशिवलक्षणे श्रूयते ।

तत्वं तदेव सादाख्यं न शिवाद्वस्तुतो भिदा ।

इत्यादिवत्

आनन्दरूपमध्यस्थं शिवं परमकारणम् ।

इति सच्चिदानन्दविग्रहस्य शिवस्य ज्ञानक्रियासाम्यरूपं सदाशिवाकारं तथा ज्ञानक्रियाभ्यां सहानन्दरूपं चास्ति इति सदाशिवाद्विशेषधर्मप्रकटनार्थमुच्यते । अत एव अत्रार्धयामपूजायां नृत्तमूर्तेर्विशेषेण परमानन्दार्चना विधीयते ।

आनन्द परमानन्द परानन्दात्मनेऽपि च ।

इत्यादि । अत एवात्मनां मुक्तानां शिवानन्दानुभवप्राप्तिपूर्वकमद्वैतरूपं सायुज्यमेव मुक्तिरिति च श्रूयते । श्रीमदचिन्त्यविश्वसादाख्यदक्षिणागमे—

ब्रह्मरूपं परं गुह्यं ग्राह्यग्राहकवर्जितम् ।
रागारागविनिर्मुक्तं द्वैताद्वैतविवर्जितम् ॥
चिन्त्याचिन्त्यविनिर्मुक्तं वाच्यवाचकवर्जितम् ।
एवमानन्दसंप्राप्तौ मुक्तिरेव न संशयः ॥
आनन्दविप्रलब्धानामानन्दोपहिता चितिः ।
चिन्महोदधिगाम्भीर्यमवसीयेत सूरिभिः ॥

इत्यादि सदाशिवसाम्यवादो निरस्यते । अथ "शान्तिकलैव शक्तिकरं शिवतत्वं प्राहुः" इति शान्तिशक्तिकरमित्युच्यते । शक्तिकरं शिवतत्वादुत्पद्यते शक्तितत्वमिति शिवतत्वस्य शक्तिकरत्वं शान्तिकलेति "शक्तिश्चैव तु विद्या च" इति विद्याकलासामीप्याज्ज्ञायते । न शक्तिरिति शक्तितत्त्वमिति स्फुटम् नादमूर्तिसमुद्भवोक्तेश्च । तेन शान्त्यादि कलात्मकमेव शिवशक्तिनादबिन्दुतत्वात्मकमिति प्रागुक्तं समञ्जसं स्यात् । तथोक्तमाधाराधेयभेदेन इति प्रागेवोक्तम् । अन्यथा शिवादीनां तत्वानां शान्त्यादिकलारूपत्वेन षट्त्रिंशत्तत्वगणनाविरोधः स्यात् । अथ

परं भावं समालम्ब्य सदाताण्डवद्गुणैः ।
अव्यक्तानि स्वरूपाणि निर्लक्ष्याणि क्रियास्तथा ॥
चतुर्धा निष्कळं त्वेकं शिवतत्वमिहोच्यते ।
ध्यानपूजानिरूपस्थं निष्कलं तु महेश्वरः ॥

इति श्रवणात् कथमत्र ताण्डवाकारः शिवः क्रियावर्त्मना पूज्य इति चेत् । उच्यते ।

तथाविधशिवाकारतयासौ निष्कलोऽपि च ।
अहं पञ्चाक्षरं साक्षान्मां तु पञ्चदशाक्षरी ॥

इत्यागमेन मन्त्रसम्भवात् पूज्य एव । यथा लयशिवाकारतया निष्कलोऽपि पञ्चमन्त्रात्मकत्वेन मन्त्रविग्रहसम्भवात् सदाशिवः पूज्यः तथेत्यत्राप्यनुसन्धेयम् । अथवा शिवसादाख्यादितत्वानां चतुर्णां निष्कलत्वेऽपि कर्मसादाख्यवक्त्राकारतया पूज्यत्वं तथा ताण्डवस्यापि सर्वतत्वसमष्टि-रूपत्वेऽपि सदाशिवेशानाश्रयत्वेन पूज्यत्वम् इत्यविरोधः । अत एव तन्नटेश्वररूपं तदीशाननृत्त-रूपमिति श्रूयते ।

सद्योजातं स्थितं रूपं वामदेवं सुखासनम् ।
अघोरं ... रूपं स्यात्पुरुषमा ... रूपकम् ॥
ईशानं नृत्तरूपं स्यात्पञ्चमन्त्रात्मरूपकम् ।

வேறிடத்தில்,

ईशानं लिङ्गरूपं तत्पुरुषं च नटेश्वरम् ।
सोमास्कन्दमघोरं च श्रीबलिर्वामदेवकम् ॥
नाथदेवं च सद्योजातं प्रकीर्तितम् ।

इत्यत्र "तत्पुरुषं च नटेश्वरम्" इति सकलाख्यपञ्चवक्त्रविग्रहभेदविषयम् । तत्पञ्चविंशति विग्रहभेदेषु नटेश्वरभेदस्य तत्पुरुषवक्त्रोत्पन्नत्वमिति । अत एव तन्महेश्वरभेदेन श्रूयते

சுத்தாக்கியையில்

कर्मेशस्य सहस्रांशान्महेशस्य समुद्भवः ।
महेशं सकळं विद्यात् सृष्टिस्थितिलयावहम् ॥
पञ्चविंशति भेदेन तन्मूर्तिः पञ्चविंशतिः ।

प्रथमं सोमधारी च द्वितीयमुमया सह ॥
तृतीयं तु वृषारूढं चतुर्थं नृत्तरूपकम् ।

इत्यादि । अत्र ईशानस्य लिङ्गरूपत्वं पञ्चसादाख्यसमष्टिरूपत्वेन सर्वतत्वाश्रयत्वं द्योतयति । अत एव श्रीमन्मकुटे ।—

तस्माद्दशैकभागेन सादाख्यस्य समुद्भवः ।
लिङ्ग पीठ प्रकारेण सादाख्यं तत्वलक्षणम् ॥
लिङ्गे शिव समुद्भूतो नादात्मा च सदाशिवः ।
पीठे शक्ति समुद्भूतो बिन्द्वात्मा च मनोन्मनी ॥
लिङ्गे च पीठिकायां च शिवशक्तिसमुद्भवः ।
लिङ्गं पुंस्तत्वमेवं स्यात्पीठं स्त्रीतत्वमेव च ॥
निष्कलौ लिङ्गपीठौ च सकलौ शक्तिशाम्भवौ ।
निष्कळा तु कलाहीना सकळा च कलान्विता ॥
यतीनां मन्त्रिणां चैव ज्ञानिनां चैव योगिनाम् ।
ध्यानपूजानिमित्तार्थं स्मृतं सकळनिष्कळम् ॥

इत्यादि । तथा श्रीवातुलशुद्धाख्यायां च—

योगिनां च यतीनां च ज्ञानिनां मन्त्रिणां तथा ।
ध्यानपूजानिमित्ताय निष्कळं सकळं भवेत् ॥
तद्रूपं हि समासेन सादाख्यमिति कीर्तितम् ।

तेन सदाशिवो ध्यानपूजादिभिरुपास्यः किमनेन ताण्डवाकारेण शिवेन इति चेत् न । अधिकारिभेदेन सदाशिवेश्वरादिवन्नृत्तरूपमप्यावश्यकमभ्युपगम्यते । यतः । तदधिकारी दक्षिणागमेषु मकुटादिक्रमेण ऊर्ध्वशैवदीक्षासंपन्न ऊर्ध्वशैव एव नत्वन्यदूर्ध्वशैवादि । (यथा न समधिको न सदाशिवोपासका मति रुद्रोपासका एव । तथाऽत्राप्यनुसन्धेयम् ।) अत एव श्रीमन्मकुटेः—

ऊर्ध्वशैवेन कर्तव्यमात्मार्थं च परार्थकम् । इति । तथाऽधिकारविषयेऽपि

चातुर्वर्ण्यस्य दीक्षायां विशेषाद्ब्राह्मणो गुरुः ।
विप्रक्षत्रियविट्शूद्राः दीक्षायां च प्रवेशकाः ॥
आत्मार्थयजनं कुर्युस्ते सर्वे न परार्थकम् ।
ऊर्ध्वशैव इति प्रोक्तः स शैवो ब्राह्मणो गुरुः ॥
निर्वाणदीक्षितानां तु आत्मार्थं च परार्थकम् ।

इत्यादिना क्रियाभेदाधिकारी च ज्ञेयः ।

तथाविधनृत्तरूपं शिवस्य पञ्चकृत्यविषयम् । यदुक्तं चिदम्बरमाहात्म्ये

पञ्चकृत्यानि मे नित्यं तादृशस्य विमायिनः ।
इदमेव परं दिव्यं ताण्डवं परिकीर्तितम् ॥
प्रकृतानन्दनृत्तं मां सर्वे वेदा वदन्ति हि ।

इत्यादि । तत्पञ्चकृत्यं त्रिविधं स्थूलसूक्ष्मपरभेदात् । तत्र परपञ्चकृत्यं लयावस्थायां निष्कलाकारपरात्परःशिवः स्वयमेव करोति । तदुक्तं श्रीमन्मृगेन्द्रे :—

स्वापेऽप्यास्ते बोधयन्बोधयोग्यान् रोध्यान्रुन्धन् पाचयन् कर्मिकर्म ।
मायाशक्ती र्व्यक्तियोग्याः प्रकुर्वन् पश्यन् सर्वं यद्यथा वस्तुजातम् ॥

इति । सूक्ष्मपञ्चकृत्यं तु भोगावस्थायां स एव नृत्ताकारपरशिवः सन् शिवशक्तिनादबिन्द्वन्तबैन्दवविषयेण करोति । तदुक्तं श्रीमति मकुटे :—

ज्योतीरूपं नटन्नित्यं सृष्टिस्थित्यन्तकारणम् ।

इति । श्रीमत्पाराख्ये च :—

अर्कस्य सन्निधौ यद्वत् सस्यादि विकरोति च ।
शिवस्य सन्निधौ तद्वच्छक्त्या क्षुब्धश्च बिन्दुराट् ॥
विकल्पबोधायाणूनां तत्वानां स्थितये कलाः ।
पञ्च तत्वानि लोकांश्च मन्त्रादीनसृजच्छिवः ॥
शान्त्यतीतपुराधारं शिवतत्वं पुराऽभवत् ।

शान्त्यादि भुवनाधारं शक्त्याख्यं शिवतत्त्वतः ॥
तेष्वीशपुरुषाघोरवामजाख्यशिवः स्थितः ।
भोगतत्त्वाह्वयो यस्मादधिकारी सदाशिवः

इति । तथा श्रीचिदम्बरमाहात्म्ये च—

पुरा महेशो भगवान्सुरासुर निषेवितः ।
कृत्वा चतुर्विधां मायां संहारमकरोत् प्रभुः ॥
तदा जगदिदं भीममप्रज्ञातमलक्षणम् ।
तमोभूतमसत्कल्पमासीत्सुप्तमिवाखिलम् ॥
तस्मिन्महति संहारे समये परमेश्वरः ।
रुद्ररूपधरः साक्षादकरोच्चण्डताण्डवम् ॥
पुनः स्वतन्त्रो भगवानिच्छाशक्तिप्रचोदितः ।
संहारान्तस्य समये सर्गं स्थाप्य स्वशक्तिषु ॥
प्रकाश्य च महामायां तस्यामद्भुतसंसदि ।
नादादि पञ्च तत्त्वानि ससर्ज जगतां प्रभुः ॥

इत्यादि । अथ स्थूलपञ्चकृत्यं तु स एव सदाशिवतत्त्वाधिपरुद्रसदाशिव एवाभिव्यक्तः सन् अधिकारावस्थितनिष्कळ सकलाकारसदाशिवो भूत्वा सादाख्यादि शुद्धविद्यातत्त्वान्तमनन्तादिष्वभिव्यक्तः सन् तदधो मायादि क्षित्यन्तं करोति । तच्छ्रूयते शुद्धाख्यायाम् :—

लिङ्गे तु जायते तत्र जगत्स्थावरजङ्गमम् ।
तस्माल्लिङ्गं विशेषेण कर्मरूपमुदाहृतम् ॥ इति । किञ्च ।
शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तेऽसिते प्रभुः । इति ।

तेन तादृशशिवो लयाद्यवस्थासु क्रमेण शिवसदाशिवेश्वरसंज्ञां च लभते । इति प्रसिद्धः । यद्येवं नटेशस्य पञ्चमन्त्रात्मकसदाशिवत्वं कथमिति चेत् । सत्यम् । पञ्चाक्षरमेव पञ्चमन्त्रात्मकं भवतीत्यविरोधः ।

तदुक्तं श्रीमन्मकुटे —

अकारः सद्यवक्त्रं स्यादुकारं वामवक्त्रकम् ।
मकारोऽघोरवक्त्रं स्याद्बिन्दुस्तत्पुरुषाननम् ॥
नादस्त्वीशानवक्त्रं स्यान्नादातीतं नटेश्वरम् ।
सूक्ष्मपञ्चाक्षरं प्रोक्तं स्थूलपञ्चाक्षरं शृणु ॥
नकारः सद्यवक्त्रं तु मकारो वामवक्त्रकम् ।
शिकारोऽघोरवक्त्रं स्याद्वकारः पुरुषाननम् ॥
ईशवक्त्रं यकारस्तु श्रीमत्पञ्चाक्षरं भवेत् ।

इति । तथा श्रीमकुटोत्तरे तदवयवविभागेन श्रूयते ।

शिवस्य स्थितिपादश्च नकाराक्षरमुच्यते ॥
मकारं कुक्षिराख्यातं शिकारं हृदयं तथा ।
वकारं मुखमित्युक्तं यकारं तालुरुच्यते ॥
स्थूलमूलमिति प्रोक्तं स्थूलपंचाक्षरं शृणु ।
शिकारं डमरुं ज्ञात्वा भुजङ्गं च वकारकम् ॥
यकारमभयं हस्तमग्निहस्तं नकारकम् ।
अपस्मारं मकारं तु सूक्ष्मपंचाक्षरं शृणु ॥

इति । अत्र तालुशब्देन शिरोदेश उच्यते ।

नकारं स्थितिपादं तु नाभिमध्ये मकारकम् ॥
हृदये तु शिकारं स्याद्वाकारं कण्ठमुच्यते ।
शिरोदेशं यकारं स्यादेवं पञ्चाक्षरं भवेत् ॥

इति । अत्र भुजङ्गं वरदहस्तमिति ज्ञेयम् ॥ अभयहस्तस्य सामीप्यात् । तदुक्तम् —

ओङ्कारोत्तुङ्गनागो डमरुधरकरो मोहयत्यग्निपाणिः
प्रौढापस्मारपृष्ठे निबिडमरुणभं पादमेकं वितन्वन् ।
कुर्वन्व्योम्न्येकपादं शिवकरमपि तत्पाणिमेकं भुजङ्गं
तत्वन्तिचीति तिष्ठन्मनसि नटवरो राजते नीलकण्ठः ॥

इति । तच्छक्तिविषयेऽपि —

यकारं तु पराशक्तिर्वाकारं तु निरोधिका ।
इच्छाशक्तिः शिकारं तु मकारं ज्ञानशक्तिकम् ॥
क्रियाशक्तिर्नकारं स्याच्छक्तिपंचाक्षरं विदुः ।

इति । पंचकृत्यविषयेऽपि

नकारं सृष्टिरूपं स्यान्मकारं स्थितिरूपकम् ।
शिकारं संहृतिं कृत्वा वाकारं तु तिरोभवम् ॥
यकारं मुक्तिदं चैव पंचकृत्यपराक्षरम् ।

इति । क्वचिदेवं श्रूयते

डमरुः सृष्टिशक्तिःस्यादभयं स्थितिकारणम् ।
संहारमग्निरूपं तु स्थितिपादं तिरोभवम् ॥
पाशादुद्धृतं तत्तु वामपादं नटेशितुः ।
आनन्दान्तर्गतं कृत्वा मुक्तिदं वरदं नृणाम् ।

इति । तेन तन्नृत्तमूर्तिस्तु एकवक्त्राद्याकार इति ज्ञायते । तदुक्तं श्रीमन्मकुटे —

एकवक्त्रं चतुर्बाहुं द्विपादं वृत्तमध्यगम् ।
आसीनं वा सुनृत्तं वा ध्यायेन्नित्यं महेश्वरम् ॥

इति । अथ —

शान्त्यतीतं पुराधानं शिवतत्त्वं पुराऽभवत् ।
शान्त्यादि भुवनाधारं शक्त्याख्यं शिवतत्त्वतः ॥
तेष्वीशपुरुषाघोरवामाजाख्यशिवः स्थितः ।

इत्याद्यागमानुसारेण तत्र भोगावस्थायां तत्पंचमन्त्रसमष्टिरूपताण्डवाकारःशिवः पंचवक्त्रादयाकारश्च भवतीति श्रूयते । तत्रैव —

पञ्चवक्त्रं दशभुजं द्विपादं वृत्तमध्यगम् ।

अङ्गुष्ठमात्रमचलं शुद्धतत्वं नवात्मकम् ॥
वर्णमन्त्रं समुच्चार्य सादाख्याकृति चिन्तयेत् ।

इति । अत एव भारते शिवपूजोपचारकथनप्रकरणे

धूपं ताण्डवदेवस्य पंचवक्त्रेषु दापयेत् ।

इति श्रूयते । तदेवं भोगावस्थितसदाशिवः ताण्डवाकार एव । अत एव तस्य नृत्तमूर्तेस्तु पूजायामधिकारावस्थितसदाशिवमूर्ध्निपीठे पूजार्थं नवतत्वार्चनानन्तरं तमीशानमन्त्रमूर्तौ मूलमन्त्रेण आवाहनं श्रूयते । श्रीमन्मकुटे —

सादाख्यस्य तदूर्ध्वे तु विन्यसेन्नृत्तरूपकम् ।
ब्रह्मतत्वमधोऽन्यस्य विष्णुतत्वं तदूर्ध्वतः ॥
तत्परं रुद्रतत्वं च तत ऊर्ध्वं महेश्वरम् ।
सादाख्यतत्वं तन्मूर्ध्नि बिन्दुतत्वमतः परम् ॥
तदूर्ध्वं नादतत्वं च शक्तितत्वमतः परम् ।
तत्परं शिवतत्वं च पूजयेज्ज्ञानमूर्तिकम् ॥
सर्वकारणदेवेशं ध्यात्वा ताण्डवमीश्वरम् ।
आवाहयेत्ततो देवं पुष्पहस्तः सुखासनः ॥
अलं कृत्वा परं ध्यात्वा सर्वव्यापि सदाशिवम् ।
सदाशिवपरं ध्यात्वाऽऽवाहयेत्सद्यमन्त्रतः ॥
स्थापनं वाममन्त्रेण ...

इत्यादि । तथा श्रीमद्वातुलशुद्धाख्यायां च कर्मसादाख्यशिवमूर्धन्येव नृत्तमूर्तिस्थितिरुच्यते ।

बिन्दुमध्ये गतो नादो नादमध्ये तु मूर्तयः ।
मूर्तिमध्ये गतं तत्वं तत्वमध्ये गतं शिवम् ।
शिवमध्ये गतं नृत्तम् ।

इत्यादि । यद्येवं तत्रैव

शिवमध्ये गतं नृत्तं नृत्तमध्ये तु शान्तिकम् ।
अतीतं शान्तिमध्ये तु शान्तातीतं परात्परम् ॥

इति नृत्तमूर्तेरुपरि शिवतत्वप्रतिपादनं कथं स्यादिति चेत् । अत्रोच्यते । नृत्तमध्ये तु शान्तिकमिति लयस्थानगतशिववत् तच्छक्तिश्च शान्ततत्वकमिति एतत्परनृत्तमूर्तेरुपरि लयशिवशक्तिसमष्टिरूपमिति यावत् । तच्छक्तिपरिणामः खलु शिवतटस्थभेदः । यदुदाहृतं प्राक् ।

शिवसृष्टिरियं प्रोक्ता शक्तीनां सृष्टिरुच्यते ।
तद्रूपं हि समासेन सादाख्यमिति कीर्तितम् ॥

इत्यनन्तरम्

सादाख्यं पंचधा प्रोक्तं तेषां लक्षणमुच्यते ।
पराशक्त्यादि पंचभ्यः सादाख्यस्य समुद्भवः ॥

इत्यादि । तथाचायमर्थः संपन्नः । तन्नृत्तमूर्तेरुपरि निष्कळाकारपराशक्त्यादिशक्तिसमाष्टिरूपं तच्छान्तमध्ये तु अतीतं, तेन शान्त्यतीतं लयशक्त्युपरिस्थितं, परात्परं नवतत्वमध्यगतनिष्कळशिवतत्वात् परात्परं लयशिवं प्रागुक्तपरादूर्ध्वं परात्परमित्यादिलक्षणलक्ष्यं तदेवात्र परनृत्ताकारविषयदहरविद्यागोचरशिवतत्वं च भवतीति । तेन सदाशिवसमवादिभिरघोरशिवाचार्यादिभिर्युक्तमीशानादिपंचमन्त्रसमष्टिरूपमधिकारावस्थितस्य सदाशिवस्यैव, न तु भोगावस्थितस्य इति तद् दूरतोऽपास्तम् । भोगावस्थितसदाशिवस्य ताण्डवेशस्य व्यष्टिरूपनवतत्वासिद्धौ समष्टिरूपे नवतत्वात्मकमूर्तेरपि सिद्धेरधिकारावस्थितसदाशिववत् । अन्यथा मकुटागमश्रुतिविरोधः स्यादिति सिद्धान्तः ।

என வருமாற்றானும் மகுடாதி தக்ஷிணகமங்களானும் ஊர்த்துவ சைவ சித்தாந்தம் விரிவின் உணர்ந்து கொள்க.

இனி "நடனங் காணவேண்டின் முயல்வர் பிராசாத நெறி யோகந்தானே" என்றது பிராசாத விளக்கத்தினும் மற்றும் ஆகமங்களினும் கண்டு கொள்க. ஈண்டு விரிப்பிற் பெருகும். இவ்வூர்த்துவ சைவர் போகாவஸ்தித சிவோபாசகர் ஆகலின், போகதத்துவ பிராப்தியே அவர்க்கு முத்தியாம் என்க. பிறவு மன்ன.

"விளம்பு மூர்த்துவ சைவம்" என்பது இங்ஙனம் கூறும் கிரியா சைவ பேதங்கட்கு ஓர் புறநடை உணர்த்துகின்றது. ஈண்டுக் கூறிய ஊர்த்துவ சைவாதிகள் ஆமாறு. மகுடத்தில் –

ऊर्ध्वशैवं तु प्रथममनादिस्तु द्वितीयकम् ।
आदिशैवं तृतीयं स्यादनुशैवं चतुर्थकम् ॥
अवान्तरं पंचमं च मिश्रशैवं तु षष्ठकम् ।
सप्तमं भेदशैवं स्यादष्टमं गुणशैवकम् ॥
आज्ञाशैवं तु नवमं शैवानि नवधा क्रमात् ।

என வரும். இம்மத பேதமும் சங்கற்பமும் சித்தாந்தத்தில் வந்த வழிக் கண்டு கோள்க. "இது கிளந்த விவைநாமமன்றிச் சித்தாந்தத்தாற் கேடு வரும் பேதமுண்டேல்" என்பதற்கு மோக்கும். உண்டாயின், தக்ஷிணத்தின் முற்கூறிய வாறே கண்டு கோள்க வேன்றவாறு. இக்காலத்து வழங்குஞ் சித்தாந்தத்திற் காணுமையின், சிறிது கண்டு, சர்வ சித்தாந்த விவேகத்திற் கூறியவாறும் ஆண்டுணர்ந்து கோள்க.

* * *

177

"சகமார்க்கம் புலஞேடுக்கி" (சித்தி. சூ. 8. பா. 21) என்பது யோக சைவத்தின் போது விதி கூறுகின்றது. ஈண்டுச் 'சகமார்க்கம்' என்றது யோக மார்க்கத்தை, அது.

सहमार्गं योगपादं सन्मार्गं ज्ञानमेव च ।

என முன் உதாகரித்தவற்றுற் கண்டு கோள்க. "தடுத்துவளி இரண்டும்" என்பது பிராணுயாமம். இஃது ஆசனத்திற்கு உபலக்ஷணம். 'புலஞேடுக்கி' என்றது பிரத்யாஹாரம். "சலிப்பற்று" என்றது தாரணை. "முச்சதுர முதல் ஆதாரங்கள் அகமார்க்க மறிந்து என்றது தியானம். "அவற்றின் அரும் பொருள்களுணர்ந்து" என்றது வீக்ஷணம். இது ஜபத்துக்கு உபலக்ஷணம். "அங்கணைந்து போய் மேலேறி அலர்மதி மண்டலத்தின் முகமார்க்கவமுதுடலம் முட்டத்தேக்கி முழுச்சோதி நினைந்திருத்தல்" சமாதி. "முதலாக" வேன்பதனல் முற்கூறிய ஆசனுதிகட்குச் சிலவற்றை யுபலக்ஷண மேன்னுது, ஈண்டே, கூறுத அங்கங்களைக் கூறிக்கோடலுமாம். இவ்வாறு வருவது மிருகேந்திரத்தில்,

प्राणायामः प्रत्याहारो धारणा ध्यानवीक्षणे ।
जपः समाधिरित्यङ्गान्यङ्गी योगोऽष्टमःस्वयम् ॥

என்னும் வாக்கியத்தால் உணர்க. ஈண்டுக் கூறுதன யம நியமாதிகள் என்க. இவ்வாறன்றி மகுடத்தில் வருமாறு:-

प्रथमस्तु यमः प्रोक्तो द्वितीयो नियमस्तथा ।
तृतीयमासनं प्रोक्तं प्राणायामस्ततः परम् ॥
प्रत्याहारः पंचमश्च ध्यानं वै षष्ठमुच्यते ।
सप्तमी धारणा प्रोक्ता समाधिश्चाष्टमो भवेत् ॥
अष्टाङ्गमिति विज्ञेयं योगिनां योगसाधनम् ।

என வரும். இவற்றின் லக்ஷணமும், மகுடத்தில்.

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमस्तु पंचधा प्रोक्तो नियमश्च ततःशृणु ॥
शुचिभावश्च सन्तोषस्तपः स्वाध्याय एव च ।
ईश्वरप्रणिधानं च नियमः पंचधा मतः ॥
गोमुखं स्वस्तिकं चैव पद्मं चैवार्धपंचकम् ।
वीरं योगासनं प्रोक्तमासनं चैव षड्विधम् ॥
प्राणायामस्तु पूर्वोक्तः प्रत्याहारक्रमं शृणु ।
इन्द्रियार्थेषु यत्कर्म प्रतिस्थानं व्यवस्थितम् ॥
यावत्तावत्स्वकीभूतं प्रत्याहारः स उच्यते ।
ध्यानमेवं विजानीयात् धारणां च ततः शृणु ॥
आधारं धारणा प्रोक्ता आधेयस्तु समाहितः ।
योगाधारक्रमं वक्ष्ये शृणु चानन्यमानसः ॥
नाभेस्तु चतुरङ्गुल्यमधस्तादग्निमण्डलम् ।
कदम्बपुष्पवज्जुष्टपत्रं जुष्टं त्रिकोणकम् ॥
मूलाधारमिदं प्रोक्तं द्वितीयं नाभिमूलके ।
भुजङ्गवलयाकारमष्टवर्तुलमेव च ॥
कुण्डलाख्या महानाडी भानुमण्डलमुच्यते ।

नाभेरूर्ध्वं तु यत्पद्मं चन्द्रमण्डलमुच्यते ॥
हृदये कण्ठमूले च तालुमूले ललाटके ।
मूर्ध्नि स्थानेषु संकल्प्य ध्यायेत्पद्मानि पुष्पवत् ॥
हृत्पद्मलक्षणं वक्ष्ये विशेषं तु महेश्वर ।
नाभौ तन्नालमेव स्यादूर्ध्वमूलमधोमुखम् ॥
कदली पुष्पवत्पुष्पमष्टपत्रं सकर्णिकम् ।
आधारलक्षणं प्रोक्तमाधेयं च ततः शृणु ॥
इडा च पिङ्गला चैव वीणादण्डस्य पार्श्वयोः ॥
सुषुम्ना मध्यगं तत्र तन्मध्ये सुषिरं तथा ।
जीवप्राणसमायुक्तस्तन्मध्येषु च संचरेत् ॥
स संचरति तत्काले मूलाधारे व्यवस्थितः ।
संयुक्तो योगमाख्यातं योगं योगी समाचरेत् ॥
मूलाधारे ततस्त्वग्निसंयुक्ते योगमभ्यसेत् ।
योगाभ्यासेन तद्योगादग्निलोकमवाप्नुयात् ॥
तदूर्ध्वे भास्करं ध्यात्वा रविलोकमवाप्नुयात् ।
इन्दुं ध्यात्वा तदूर्ध्वे तु चन्द्रलोकं स गच्छति ॥
भ्रुवोर्मध्ये पराशक्तिं ज्योतीरूपां विचिन्तयेत् ।
शिरोपरि परं ध्यात्वा प्राप्नुयादणिमादिकम् ॥
अणिमा परमाण्वादेरपि सूक्ष्मतरा स्थितिः ।
लघिमा शीघ्रवेगित्वं पङ्कादावप्यमज्जनम् ॥
महिमा व्याप्य च स्थानं बृहद्देहेन्द्रियादिभिः ।
त्रितयं कायतः सिद्धमैश्वर्यमणिमादिकम् ॥
प्राप्त्यादयो गुणाः पञ्च योगिनः करणात्मजाः ।
मनसाऽभीष्टसंसिद्धिः प्राप्तिर्नाम गुणालया ॥
निर्माय स्त्रीसहस्राणि क्रीडाप्राकाम्यमाशु या ।
आज्ञाविधानं ब्रह्मादौ तत्पूजा चेशिता मता ॥

वशीकृतिर्वशित्वं स्याज्जगन्निर्माणमेव च ।
भुञ्जानस्यास्य कर्माद्यैरबाधो गरिमा मता ॥

என ஸ்ரீ பௌஷ்கராதிகளிற் கூறுவன. இனி ஸ்ரீ மகுடத்தில்:

अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यं च तथेशित्वं वशित्वं च शिवत्वकम् ॥
यत्स्वेच्छया त्यजेत्स्थूलमणुमात्रशरीरतः ।
अणिमानं लभेत्तस्मादणिमेत्यभिधीयते ॥
सहसैव तथा गत्वा मूलवर्णं प्रभेदकम् ।
स्वेच्छया लभते यस्माल्लघिमेति ततःस्मृतः ॥
भूमौ मग्नो जलं कृत्वा पूज्यते स्थानवासिभिः ।
सर्वत्र पूज्यते यस्मात्तस्मात्स महिमा भवेत् ॥
सर्वं द्रव्यं च संप्राप्य प्राप्तिरेषा प्रकीर्तिता ।
प्रकामेषु शरीरेषु प्राकाम्यं च प्रवेशनात् ॥
सूर्यादि भुवनप्राप्तं तदीशत्वमुदाहृतम् ।
यद्वशित्वं च तत्रैव तद्वशित्वं विधीयते ॥
शिवसायुज्यसामर्थ्यात्तच्छिवत्वमिति स्मृतम् ।
अणिमाद्यष्टसिद्धीश्च भजेद्योगी विशेषतः ॥
सालोक्यादिचतुष्कं च क्रमाद्भज्येन्महेश्वर ।
ध्यात्वा लोकं तु संप्राप्तं सालोक्यमिति कथ्यते ॥
तद्देवस्य समीपस्थं सामीप्यमिति चोदितम् ।
तत्तद्रूपस्य संप्राप्तिः सारूप्यमिति विश्रुतम् ॥
ज्ञानात्सायुज्यमेवोक्तं तोये तोयं यथा तथा ।

என்பது முதலியன. ஈண்டுக் கூறிய ஊர்த்துவ சைவர் அத்வைதவாதிகளேன முற்கூறியதூஉம் விளங்கிற்று. பிறவும் காமிகாதிகளில் விரித்துக் கூறுமாறே கண்டுகொள்க. ஈண்டு "வினைகள் உகு அம்மார்க்கம்" என்பது*முற்றுகரம் கெட்டு உயிரேறி மகாரம் விகாரமாய், உகமார்க்கஅட்டாங்கயோகம் என நின்றது. பிறவு

மன்ன. (உகு + அம் + மார்க்கம் என்னும் புணர்ச்சியுள், குகரத்துயிர் கெட்டது. அம் என்பதன் உயிர் ககரமெய்யோடு சேர்ந்தது. மெய் விகாரமாயிற்று.)

178 * * *

"துறவிகளுக்குரிய சிவயோக மார்க்க" மென்பது யோகத்திற் சரியையும் யோகத்திற் கிரியையுமாமாறு கூறுகின்றது. ஈண்டுத் துறவிகளுக்குரிய சிவ யோக மார்க்கமென்றதற்கு வருமாறு. காமிகத்தில்.

सहमार्गं भवेत्त्यक्तसंसाराच्छुचिमन्त्वयुक् ।
समम्तृन्निरहंकारी शिवयोगकृतश्रमः ॥

என வரும். இனி "அறநெறியாங் கொல்லாமை முதலான" வென்பது யம நியமங்களை. அவ்வாறு ஆகமங்களில்.

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चैते यमा दश ॥
तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥
एते च नियमाः प्रोक्ता योगशास्त्रविशारदैः ।

என வரும். இவற்றின் லக்ஷணம் ஞானசாரமிச்சிரமாய் வருமாறு சூத சங்கிதையில். (ஞான - அத்தி - 13 - சுலோ 4 முதல் 18 முடிய)

वेदोक्तेन प्रकारेण विना सत्यं तपोधन ।
कायेन मनसा वाचा हिंसा हिंसा न चान्यथा ॥
आत्मा सर्वगतोऽच्छेद्यश्चादाह्य इति या मतिः ।
सा चाहिंसा परा प्रोक्ता मुने वेदान्तवेदिभिः ॥
यत्त्वदुष्टेन्द्रियैर्दृष्टं श्रुतं वेदविदां वर ।
तस्यैवोक्तिर्भवेद्विप्र सत्यता नात्यथा भवेत् ॥
सर्वं सत्यं परं ब्रह्म न चान्यदिति या मतिः ।
तत्सत्यं परमं प्रोक्तं वेदान्तज्ञानभावितैः ॥

अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि वा ।
मनसापि निवृत्तिर्या तदस्तेयं विदुर्बुधाः ॥
आत्मनोऽनात्मभावेन ह्यपहारविवर्जनम् ।
यत्तदस्तेयमित्युक्तमात्मविद्भिर्महात्मभिः ॥
कायेन मनसा वाचा नारीणां परिवर्जनम् ।
ऋतुंकालं विना स्वस्यां ब्रह्मचर्यं तदुच्यते ॥
ब्रह्मभावे मनश्चारं ब्रह्मचर्यं वरं तथा ।
स्वात्मवत्सर्वभूतेषु कायेन मनसा गिरा ॥
अनुकम्पा दया सैव प्रोक्ता वेदान्तवेदिभिः ।
पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि सन्ततम् ॥
ऐकरूप्यं मुने यत्तदार्जवं प्रोच्यते मया ।
कायेन मनसा वाचा शत्रुभिः परिपीडिते ॥
बुद्धिक्षोभनिवृत्तिर्या क्षमा सा मुनिपुङ्गव ।
वेदावेदविनिर्मोक्षः संसारस्य न चान्यथा ॥
इति विज्ञाननिष्पत्तिर्धृतिः प्रोक्ता हि वैदिकैः ।
अहमात्मा न मर्त्योऽस्मीत्येवमप्रच्युता मतिः ॥
या सा प्रोक्ता धृतिः श्रेष्ठा मुनिभिर्वेदवेदिभिः ।
अल्पमृष्टाशनाभ्यां तु नास्ति योगः कथंचन ॥
तस्माद्योगानुगुण्येन भोजनं मितभोजनम् ।
स्वदेहमलनिर्मोक्षो मृज्जलाभ्यां महामुने ॥
यत्तच्छौचं भवेद्बाह्यं मानसं मननं विदुः ।
अहं शुद्ध इति ज्ञानं शौचं वाञ्छन्ति पण्डिताः ॥

இங்ஙனம் யம லக்ஷணம் போல நியம லக்ஷணமும் வருமாறு. அதிலேயே :-
(ஞான - அத்தி - 14 சுலோ 3 முதல் 22 முடிய)

वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ॥

कोऽहं मुक्तिः कथं केन संसारं प्रतिपन्नवान् ।
इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः ॥
यदृच्छालाभतो नित्यं प्रीतिर्या जायते नृणाम् ।
तत्सन्तोषं विदुः प्राज्ञाः परिज्ञानैकतत्पराः ॥
ब्रह्मादिलोकपर्यन्ताद्विरक्तस्य परात्मनि ।
प्रियं यत्तन्महाप्राज्ञाः सन्तोषं परमं विदुः ॥
श्रौते स्मार्ते च विश्वासो यत्तदास्तिक्यमुच्यते ।
न्यायार्जितधनं चान्नं श्रद्धया वैदिके द्विजे ॥
अन्यद्वा यत्प्रदीयेत तद् दानं प्रोच्यते मया ।
अवैदिकाय विप्राय दत्तं यन्मुनिपुङ्गव ॥
नोपकाराय तत्तस्य भस्मनीव हुतं हविः ।
ब्रह्माणं विष्णुमीशानं वैश्यक्षत्रियबाडवैः ॥
यथा शक्त्यर्चनं भक्त्या यत्तदीश्वरपूजनम् ।
रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना ॥
हिंसादिरहितः कार्य एतच्चेश्वरपूजनम् ।
सत्यं ज्ञानमनन्तं च परानन्दं ध्रुवं परम् ।
प्रत्यगित्यवगन्तव्यं वेदान्तश्रवणं बुधैः ॥
सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम ।
शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने ॥
सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः ।
वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥
तस्मिन्भवति या लज्जा ह्रीस्तु सैवेति कीर्तिता ।
वैदिकेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत् ॥
प्रसन्नगुरुणा पूर्वमुपदिष्टं त्वनुज्ञया ।
धर्मार्थमात्मसिद्ध्यर्थमुपायग्रहणं व्रतम् ॥
वेदोक्तेन प्रकारेण मन्त्राभ्यासो जपः स्मृतः ।

कल्पसूत्रेऽथवा वेदे धर्मशास्त्रे पुराणके ॥
इतिहासे च वृत्तिर्या स जपः प्रोच्यते मया ।
स जपो द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥
वाचिकोपांशुरुच्चैश्च द्विविधः परिकीर्तितः ।
मानसो मननध्यानभेदाद् द्वैविध्यमाश्रितः ॥
उच्चैर्जपादुपांशुश्च सहस्रगुणमुच्यते ।

இவை முதலாயின. இனிப் 'பிறவும்' என்றதனால் "ஆசனாதி" களுமீண்டே கோள்க. "ஆசனம்" முற்கூறினும். மேலும் கூறுதும். "இனி அரனை இதயத்திருத்தி வணங்கல்" ஆவது மூலமந்திர பூர்வம் சகளத்தியானம் பண்ணுவதும் யோக மார்க்கத்தால் அர்ச்சனையும் பிறவுமாம். இனிப் "பிரணவத்தானெறிநிகழும் பிராணயாமாப்பியாசம்" ஆவது நாடி சோதனா பூர்வம் பண்ணப் படுவது.

प्रणवान्वितमेवोक्तः प्राणायामस्तु योगिनाम् ।

எனவும், மேலும், (ஞான - அத்தி - 16 சுலோ - 15, 16)

विरक्तानां प्रबुद्धानां वैश्यानां च तथैव च ।
शूद्राणां च तथा स्त्रीणां प्राणसंयमनं मुने ॥
नमोऽन्तं शिवमन्त्रं वा वैष्णवं वा न चान्यथा ।
नित्यमेव प्रकुर्वीत प्राणायामांस्तु षोडश ॥

எனவும், பின்னும். (சுலோ 18 முதல் 24 முடிய)

बाह्यतः पूरणं वायोरुदरे पूरको हि सः ।
संपूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् ॥
बहिर्विरेचनं वायोरुदराद्रेचको भवेत् ।
प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः ॥
कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं तथा ।
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः ॥
सम्भवत्युत्तमे प्राज्ञः प्राणायामे सुखी भवेत् ।

प्राणायामेन चित्तं तु शुद्धं भवति सुव्रत ॥
चित्ते शुद्धे मनः साक्षात्प्रत्यक् ज्योतिःष्ववस्थितम्
प्राणश्चित्तेन संयुक्तः परमात्मनि तिष्ठति ॥
प्राणायामे परस्यास्य पुरुषस्य महात्मनः ।
देहश्चोत्तिष्ठते तेन किञ्चिज्ज्ञानाद्विमुक्तता ॥
रेचकं पूरकं त्यक्त्वा कुम्भकं नित्यमभ्यसेत् ।
सर्वपापाद्विनिर्मुक्तः सम्यक् ज्ञानमवाप्नुयात् ॥

எனவும் பிறவும் வருமாற்ருன் உணர்க. "பிறவும்" என்றதனுல் இன்னும் யோக சாஸ்திரத்தில் கூறியவாறே யீண்டைக்கு வேண்டுவன வெல்லாங் கோள்க. அது வருமாறு, தத்துவப் பிரகாசத்தில்.

"யோகத்தி னிற்சரியை யுற்கரிகை தரிக்கை
 யுயர்பிரமத் தால்ரேச கபூரககும் பகங்கண்
மோகமற வுத்தூள மன்னமுதல் குறைதல்
 மூலகன்மங் தூலகன்ம முடற்செயல்கண் முதலா
வாகுமிய மம்நியம மெல்லாமுன் செய்தங்
 கருஞ்சங்கி தாமூலத் தாலரனை மனத்திற்
பாகமுற வேகண்டு தண்டன் பண்ணிப்
 பரிவுறுவ திதுவென்று பகரு நூலே." (52)

என வரும். இனி "நெறி நிகழு மிதிற் சரியை சொலின் நூற்றெட்டாசனத்திலுற இருந்து தங்க முகப்பிராணுயா மாதியுரைத்திடு மப்பேதம் நூற்றெட்டு மியற்று தலே" என்பதற்கு வருமாறு தத்துவப் பிரகாசத்தில்:-

"யோகத்திற் கிரியைபிரா ணுயாம முன்னே
 யுயருமா தன்நூற்றெட் டவைபதுமம் பத்ரம்
தேகத்தங் கோமுகையே சுவத்தி சிங்கங்
 தீபம்வீரஞ் சுகமுத்தம் மயிறண்டமிருடி(டுருசி)
ஊகத்தஞ் சக்கரவா கனங்கோழி மற்ச
 முயர்சீபா தாங்கங்கே சாங்கமுமத் தாங்கம்
நாகத்த மிடாதனமும் பிங்கலா தனமும்
 நமற்காரஞ் சானுவா னம்பாடி நகழ்வே" (107)

"அத்தகண்டஞ் சங்காரஞ் சருவசங் காரம்
 அசுவமுகங் கோகன்னங் கேசரமேற் பாத
மத்தமேற் காலேகபாத மேக வத்த
 மாநிருத்தங் குஞ்சிதம் வராகங் தேய்வ

மெத்துவாத் துவமிடக்கால் வலக்கால்மு சலிகை
　　மிகுசகளங் கைநிமிர்த்தல் கானிமிர்த்தல் கட்டல்
புத்தமலர்த் தாமரைபோன் முகுளம் ஞானி
　　புகல்கரடி யிராகுவுடல் சோம்புமுளா தனமே.'' (108)

''தேரைசிம்புள் சிலம்பிசிச் சிலிபூஞை கிருமி
　　சிலைகோரஞ் சேமுகஞ்சக்கர மச்சயனம்
வீரவாதன மாமை மெய்மே னிற்றல்
　　விரவுமண் டலங்கள்பதி ஞென்று மேலாய்ச்
சேர்விசேடங் கூட்டி நூற்றெட்டாகுந்
　　திகழ் பிராணாயாம முயிரிதன்மேற் சேலுத்த
வார்வ நூற்றெட்டாகு மமுதம் பிலா வகமு
　　மக மருட மார்ச்சனமுமங்கி யெழுப்பாமே.'' (109)

'' ஓங்கு வித்தல் பத்துநாடியு மோக்க வாங்க
　　லுயருமிரேசக பூரக கும்பகந்தான்
ருங்கு மிவை மூன்ரேன்றுமே சரியை கிரியை
　　தகுயோக நிருத்த நாதம் பிரணவந்தான்
பாங்க சபை பூரித்தல் கும்பித்தல் விடுதல்
　　பணிப்பித்தல் கழிப்பித்தல் பணிவித்த றணித்தல்
தீங்கற வாங்கல்அ டக்கல்நாடி தோறும் போக்கல்
　　திகழ் புருவத்தேற்றல் பச்சிமத் தேற்றல் செறித்தல்.'' (110)

'' மாற்றுதல் கன்னத் தகற்ற ஞக்கிஞ லடக்கல்
　　வாங்குதன் மெத்தல் போக்கு வேருக்கல் வாயு
வூற்ற வுயிராக்கன் மண்டலத் தாக்கல் பிறித்த
　　லுயி ராதாரத்துய்த்த லதுவாக வுன்னல்
மேற்றுலையிற் சுழுமுனையிற் சித்திரம் வச்சிரத்தல்
　　விழை வறுத்த லழிவித்த லழியாது தடுத்த
ஞற்றிசையுங் காண்டல் சூனிய மாக்கலடைத்த
　　ஞளும் வாங்கா விழுங்க னடுவே நிற்பித்தல்.'' (111)

'' மார்க்கத்தினின் றேற்றலு பத்தத்தி லேற்றல்
　　வரு நாசித்துனை துறத்தல் சுழுனை துறப்பித்தல்
மேற்சித்தம் வேருதன் மன பவன மோடுக்கல்
　　விரிந்த விடத்தே விரித்தல் கலைவழியினிறுத்த
ரேற்றமது முடியாது விந்து வினைச்சுட்டல்
　　சுகமைந்து மடைத்த றிருட்டித்தலுற் கரித்த
லூற்ற மற வுலர்த்தல் சோடிப் பித்தல் கலத்த
　　லோட்ட லேட்டாதாக்க லொன்ருக்கல் பணியே.'' (112)

'' ஆங் கவைதான் விசேடத்திற் கூட்ட நூற்றெட்டா
　　மடைவிவைகள் செய்வதுவே யோகத்திற் கிரியை.''

எனவரும். பிறவும் விரிக்கின் விரியும் இவற்றினிலக்கண மற்றும் சிவாகமத்தில் யோக பாதத்திற் கண்டு கொள்க.

179 * * * *

"யோகத்தில் யோகம் நிராதாரம்" என்பது யோகத்திலே யோக மாமாறு கூறுகின்றது. நிராதார யோகமாவது பிரம ரந்திரத்தின் மேற்றுவாதசாந்தம் மட்டும்.... ... "முயர்புலனைக்கவர் பொறிகள்" - கன்மேந்திரியம் ஞானேந்திரியமு மிவற்றுடனியைந்த பிறவுமாம். "மோகத்து வளித்தேத்தங் கோரு விகற்ப மற்று" என்பது, மூர்ச்சையைப் பண்ணும் பிராணவாயு முதலான பத்து வாயுவையு மியங்காமல் முதன்மையான பிராண வாயுவைக் கபாலத்தி லடக்கிச் சித்தஞ் சலியாமனிறுத்தி என்றபடி. "முச்சதுர மாதார மடைவே நீங்கி" என்பது ஆதார முச்சதுரமென மாற்றுக. ஆதாரம் - மூலாதாரம், முச்சதுரம் சுவாதிட்டானம் முதலான வாதாரங்கள்? (அவை) அந்தப் பிரமரந்திரத்தின் கீழுள்ளன. அவைகளை நீங்குமடைவே நீங்கி யதனுன் மும்மண்டலத்தையுங் கழித்து அசபை மந்திரத்தைக் கீழ் மேலாக வுச்சரித்து, வாயுவை யேற்றி மேலே சென்று என்றபடி. "மாகத்தின் மதிகலையினமுதந்தேக்கி" என்பது. ஆகாயத்தின் சந்திர கலையில் வாயுவை அக்னியோடே கலப்பித்துறைக்கச் செய்து அதனுலே யுருகி விழும் அமுதத்தைக் கொண்டு உடலெங்கும் நிறைத்து என்றபடி. "வளருமகாரத்தோனியின் நடத்தை மன்னி" யென்பது மிக்குவரும் அகாராக்கரத்தினுலே திருக்கூத்தைத் தியானித்து என்றபடி. "யேகத்தனுய் அதனின் செயல்தானுகி யிரண்டற்றுத் தூங்குவதென்றி சைக்கும் நூலே" என்பது அந்தத் திருக்கூத்தோ டொன்றுன வனுகி அந்த நடனத்தின் வழியிலே தியான மென்றுந் தானென்றும் இரண்டுபடாமலிருந்து தூங்குவது யோகத்தில் யோகமாம் என்றபடி. இதனை விரித்துணரவேண்டிற் காமிகாதி சிவாகமத்திற் கண்டு கொள்க. ஈண்டுக் கூறுமியல்பு அசபாயோகத்திற்கு மொக்கும். அது.

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।
वासान्ते फालमध्ये डफकठसहिते * कण्ठदेशे स्वराणां
हंक्षं तत्वार्धरूपं सकलदलयुतं वर्णरूपं नमामि ॥
मूलाधारे चतुष्पत्रे पद्ममध्ये विनायकम् ।

* .... ... आदि युक्ते क्षलान्ते
मध्ये हंसं सुदीप्तं - वनद - करं दिव्यरूपं नमामि —इति आदर्शे पाठः

गजवक्त्रं च रक्ताभं त्रिणेत्रं च महोदरम् ॥
दन्तपाशाङ्कुशापूपचारुबाहुचतुष्टयम् ।
महादेवसुतं मूलमन्त्रमूर्तिमहं भजे ॥
स्वाधिष्ठाने च षट्पत्रपद्मे वाणीपतिं विभुम् ।
हेमाकारं चतुर्वक्त्रं शुभ्रवस्त्रोपवीतकम् ॥
स्रगक्षमालाकलशदण्डचारुचतुर्भुजम् ।
नेत्राष्टकसमायुक्तं नित्यं वन्दे पितामहम् ॥
मणिपूरकसंज्ञे च पद्मयुग्मदलात्मके ।
लक्ष्मीकान्तं च नीलाभं शङ्खचक्रगदाधरम् ॥
श्रीवत्सलाञ्छनं देवं पीताम्बरविराजितम् ।
वनमालां किरीटं च कुण्डले च विधारिणम् ॥
अभयं सर्वदेवानामम्बुजाक्षमनामयम् ।
अनेकादित्यसंकाशं वन्दे विष्णुमतन्द्रितम् ॥
अनाहते द्विषट्पत्रपद्ममध्ये परं प्रभुम् ।
क्षीराभं कालकण्ठं च त्रिणेत्रं चन्द्रशेखरम् ॥
गङ्गाधरं चतुर्बाहुं शूलाग्निवरदान्वितम् ।
ज्ञानमुद्राधरं देवं नागेन्द्रकृतकङ्कणम् ॥
पुण्डरीकाजिनधरं भूतिशोभितविग्रहम् ।
प्रलयोदयकर्तारं वन्दे रुद्रं पिनाकिनम् ॥
विशुद्धाख्ये च युग्माष्टदलपद्मे महेश्वरम् ।
शङ्खकुन्देन्दुशोभाढ्यं शार्दूलाजिनवाससम् ॥
इन्दुगङ्गाजटाजूटं महादेवं महाद्युतिम् ।
परशुं च मृगं वापि दधानं चात्मरूपिणम् ॥
वामे महेश्वरीयुक्तं वन्दे देवं महेश्वरम् ।
आज्ञायां द्विदले पद्मे परमात्मानमव्ययम् ॥
शुद्धस्फटिकसंकाशं द्वात्रिंशल्लक्षणान्वितम् ।

बद्धपद्मासनं पञ्चवर्णवक्त्रं मनोहरम् ॥
त्रिपञ्चनयनं चार्धसोमचूडं शुभावहम् ।
दशबाहुसमायुक्तं चित्रकायाजिनाम्बरम् ॥
वरदाभयसंयुक्तं वामदक्षिणहस्तकम् ।
शूलं वज्रं तथा खड्गं परशुं पाशमेव च ॥
नागं वह्निं ... च धारिणं शान्तरूपिणम् ।
पञ्चावरणसंयुक्तं पञ्चकृत्यपरायणम् ॥
पञ्चाक्षरपरं देवं पञ्चमन्त्रमहातनुम् ॥
अष्टत्रिंशत्कलोपेतं आदिमध्यान्तवर्जितम् ।
विद्यानामादिभूतेशं बिन्दुनादसमन्वितम् ॥
सर्वालङ्कारसंपूर्णं षट्त्रिंशत्तत्वनायकम् ।
मनोन्मनीसमायुक्तं वन्दे देवं सदाशिवम् ॥
षडाधारात्परे मूर्ध्नि सहस्रदलपङ्कजे ।
गुरुनाथं कृपामूर्तिं जपाकुसुमसन्निभम् ॥
द्विनेत्रं द्विभुजं शान्तं रक्तवर्णानुलेपनम् ।
रक्तोत्पलधरं नित्यं रत्नाढ्यमकुटोज्ज्वलम् ॥
तत्त्वातीतं परं शक्तं साक्षान्मुक्तिप्रदायकम् ।
सन्मार्गदेशिकं वन्दे सच्चिदानन्दविग्रहम् ॥

எனவும் பிறவும் வருமாற்றுன் உணர்க. நிராதார யோகமாவது பிராசாத பஞ்சாக்கர முதலிய வற்றின் முறையால் குரு உபதேசித்தபடி தியானம் பண்ணுவது. ஈண்டுக் கூறிய யோகத்தில் யோகம் சித்தியாரில்,

"...............முச் சதுர முதலாதாரங்கள்
அக மார்க்க மறிந்த வற்றினரும் பொருள்களுணர்ந்தங்
கணைந்து போய் மேலேறி யலர்மதி மண்டலத்தின்
முகமார்க்க வமுது டல முட்டத்தேக்கி
முழுச் சோதி நினைந்திருத்தல்.........................." (சூ. 8 - பா. 21)

என்பதனுல் விளங்கும். இது சித்திப்பது முன்னர்ப் புலனேடுக்கி, உச்சுவாஸ நிச்சுவாஸ மிரண்டுமில்லாது, பிராண யாமத்தின் பின்னர்ச் சலிப்பற்றிருக்கிற

தாரணை சித்தியானபின் என்க. புலனொடுக்கும் பிரத்தியாகாரம் முன்னரே கூறப் பட்டதாயினும் யோக சித்தி யுடைவிற் பிராணயாமசித்தியின் பின்னரே நிகழு மெனக் கொள்க.

180 * * *

"முச்சதுரம்" என்றது முக்கோணத்தை யுடைய.... மாயிருக்கிற மூலா தாரத்தை. அது.

गुदाद्व्यङ्गुलतश्चोर्ध्वं मेढ्रादि द्व्यङ्गुलादधः ।
मूलाधारमिति ज्ञेयं त्रिकोणं चतुरश्रकम् ॥

என வருதலின், பிறவாறும் கூறுதும். இவ்வாறு வரும் ஆதாரங்களும் அதிலமரும் பொருளாகிய சிவபேதங்கள் சத்திபேதங்கள் அக்ஷராதிகளெல்லாம் யோகபாதத்தின் விரிவிற் கண்டுகொள்க. எனவே மூலாதாரம் முதலாகிய ஆதா ரங்களிலிருக்கும் விநாயகர் முதலிய தேவர்களும் மற்றுமறிந்து லயம் பண்ணு மடைவே பண்ணிப்போய், அசபா பிராசாதாதி நெறிகளாற் பிரமரந்திரமளவும் சென்று பிரம ரந்திரத்திலே அதோமுகமாய், சகஸ்ரதளமாய், வாழைப்பூப்போலே இருக்கிற தாமரை முகையை "ஜ்யோதிர் ஜ்யோதி" என்ற பதோச்சாரணத்தாலே உதிக்கப்பட்ட சிவார்க்கனலே அலரச்செய்து அந்தத் தாமரைப்பூவின் கேசராக் கிரகத்திலே உள்ள சந்திர மண்டலத்தை ஆகுஞ்சனத்தினலே மூலாக்னியை - பீசத்தினலே எழுப்பி நாடிசக்கிரத்தைப் பேதித்து அந்த அக்னியினலே இளகப்பண்ணி அந்த அமிர்தத்தைச் சர்வ நாடிகளினும் நிரப்பி அந்த அமிர்தபான சுகோதய பூருவமாகச் சிவனை இரண்டறத் தியானம் பண்ணி அழுந்துதல் நிராதார யோகம் என்பதாயிற்று. அன்றி, பிராசாத மந்திராதி யோகங்களான் நிராதாரத்தை அடைந்து தியானம் பண்ணி அழுந்துதலும், நிரா தார யோகம் எனலாம் என முற்கூறியதுஉமாம், இவ்வாறே பிறவும் விரித்து ரைத்துக் கொள்க. இவ்வளவும் கூறும் யோகபேதஞ் சகளத்திற்கும் நிஷ் களத்திற்கும் பொதுவாகலின் மேலிவ்விரண்டையும் பகுத்துக் கூறுப.

181 * * *

"இன்னணமாம்" என்பது சகளயோகத்தின் பொது வியல்பு கூறுமுகத்தால் அதன்பேதமும் பகுத்துக் கூறுகின்றது. அது வருமாறு சர்வசித்தாந்த விவேகத்தில் :-

शिवयोगिमते मुक्तिः सारूप्यमिति कथ्यते ।
न तु सालोक्य सामीप्य पदावाप्तीति ये स्मृते ॥

न श्रेष्ठौ पुरुषार्थौ तावसंपूर्णमनोरथौ ।
शिवसारूप्यसंप्राप्तिः शिवत्वप्राप्तिरिष्यते ॥
सा मुक्तिः शिवसाम्येति सिद्धान्ते श्रूयते स्फुटम् ।
शिवसमानतारूपं शिवविग्रह एव च ॥
सायुज्यमिति तत्प्रोक्तमित्यादि वचनादिह ।
सायुज्यमिति पर्यायः सारूप्यस्येति निश्चयात् ।
अविरोधस्त्वनेकेशत्वाददोषोऽपि नो भवेत् ॥
शिवप्रसादतो मुक्ता जीवा यस्मात्तथा तचः ।
मुक्तात्मानोऽपि शिवाः किन्त्वेते तत्प्रसादतो मुक्ताः ।
सोऽनादिमुक्त एव विज्ञेयः पञ्चमन्त्रतनुः ॥
ततः सारूप्यमुक्तिर्या सा मुक्तिर्योगिनां मते ।
अणिमादि महासिद्धिप्रदा हि परमा मता ॥

எனவும்,

योगशैवाश्च बहवो गृह्यन्तेऽत्र चतुर्विधाः ।
सिद्धान्तोऽनादिशैवश्च तथाऽवान्तर एव च ॥
योगशैवाः चतुर्विधा एवं संग्रहतो मताः ।

எனவும் வரும்,

இனி, "பன்னு தத்துவ மநேக சைவரெல்லாம் பாவிக்கச் சித்தி முத்தி பலிக்குமென்பர்" என்றது, யோக சைவர் அனைவருக்கும் பொதுவாயினுந் தத்துவ சைவரென முற்கூறியவாறே வேறுபட்டு வருதலின் தத்துவத்தியானத்திற்கு அந்தத் தத்துவசைவரே சிறப்புடையராகலின் வேறு கூறப்பட்டார் என்க. மற்றனைத்தும் மேல் விளங்கும்.

182 * * *

"உரை செய் அவாந்தரசைவர்" என்பது நிறுத்த முறையானே அவாந்தர யோகசைவர் மதம் கூறுகின்றது. அது வருமாறு, சர்வசிந்தாந்த விவேகத்தில்.

अवान्तरे तु पूर्वोक्तमङ्गीकृत्य यथोचितम् ।
... केशवेऽस्मिन् पदमुक्तिमते पुनः ॥

प्रणवः शब्दरूपत्वाज्जडो वर्णादि पञ्चकम् ।
जीवानां ज्ञानहेतुः स्यात्तत्तद्विषयगोचरं ॥
ब्रह्मादिप्रेरकैःप्रेर्यः परो बन्धस्तथागमः ।
अकारश्च उकारश्च मकारो बिन्दुनादकः ॥
योगेन प्रणवं ज्ञेयं पञ्चदेवात्मकं परम् ।
अकारश्च उकारश्चाहङ्कारं बुद्धिरेव च ।
मकार ... ... ... ... त्कं नादात्मविग्रहम् ।
एवं पञ्चप्रकारेण ओङ्कारोहतमुच्यते । ?
तज्ज्ञातस्वात्मबोधस्तु सजलस्य तरङ्गवत् ।
अकारं ब्रह्मदैवत्यं उकारं विष्णुदैवतम् ॥
मकारं रुद्रदैवत्यं बिन्दुरीश्वर एव च ।
नादं सदाशिवं प्रोक्तमित्येताः पञ्च देवताः ॥
चतस्रो वृत्तयस्तस्या याभिर्व्याप्तास्त्रिधासवः ।
आप्योरपरमो बन्ध एभ्यो मुक्तिस्तु नापरः ॥
तन्निवृत्त्यविनाभूतो दृक्क्रियावारको यतः ।
इत्येवं न पतिर्नादस्ततोऽन्यश्चेतनःशिवः ॥
स स्तन्मादिस्वरूपेण पञ्चकृत्येन पञ्चधा । ?
तेषां शिवैकरूपत्वान्न वैषम्यं परस्परम् ॥
नानारूपविकल्पेन ध्येयः सर्वार्थ ईश्वरः ।
तस्माद्विष्णुश्च रुद्रश्च ईश्वरश्च तथा शिवः ॥
पञ्चधा पञ्चदैवत्यं सकलः परिपठ्यते ।
येन येन हि रूपेण साधकः संस्मरेत्तदा ॥
तस्य तन्मयतां याति चिन्तामणिरिवेश्वरः ।
इत्यतो मुक्तिसिध्यर्थमुपास्यास्ते तथा क्रमः ॥
मूलाधारे स्थितो ब्रह्मा नाभ्यन्तं व्याप्य तेजसा ।
नाभिस्थानगतो विष्णुः कण्ठान्तं तु स्वतेजसा ॥

कण्ठे रुद्रो ललाटान्तं स्थितो व्याप्य स्वतेजसा ।
ललाटे तु महेशः स्याद्ब्रह्मरन्ध्रावधि स्थितः ॥
तदूर्ध्वे तु सदेशः स्याद्व्याप्य सर्वं स्वतेजसा ।
इति स्वस्वस्थले ध्येयाः स्वतेजोमण्डलान्विताः ॥

என வரும், சுப்பிர பேதத்திலோ வேனில் ஸ்தானபேதத்தோடுகூட, தியானம் கூறப்படுகின்றது. அதனை,

ब्रह्माणं हृदये स्मृत्वा ब्रह्मलोकमवाप्नुयात् ।
विष्णुं ध्यात्वा तदूर्ध्वे तु कण्ठमूले व्यवस्थितम् ॥
शिखान्तं व्यापयेद्योगी योगाभ्यासेन तद्गुणैः ।
तालुमूले स्मरेद्रुद्रं रुद्रलोकपदेच्छया ।
भ्रुवोरुपरि चेशानं व्यापकं स्वेन तेजसा ॥
ललाटे चेश्वरं ध्यात्वा तस्य लोकमवाप्नुयात् ।
सदाशिवं तु शिरसि ध्यात्वा तत्रोपभुज्यते ॥
इत्यवान्तरसिद्धान्तः संग्रहात्प्रतिपादितः ।

எனவும் பிறவும் வருமாற்றான் உணர்க.

183 * * *

"சுத்த சைவநெறி" என்பது சுத்த சைவயோகமதமாமாறு கூறுகின்றது. அது வருமாறு சர்வசித்தாந்த விவேகத்தில்.

अथात्र शुद्धशैवाख्ययोगपक्षो निरूप्यते ।
प्रागुक्तपुत्रमार्गेषु शुद्धशैवस्य यन्मतम् ॥
तन्मते सिद्धमर्थं तदङ्गीकृत्य यथोचितम् ।
पशुः पाशश्च पूर्वोक्तः पतिरेव सदाशिवः ॥
महेश्वरादिदेवास्तु तदाज्ञापरिपालकाः ।
पञ्चसादाख्यभेदेषु यत्पूज्यं कर्मसंज्ञकम् ।
तदेवायं शिवः प्रोक्तः षट्त्रिंशत्तत्त्वनायकः ॥

तदर्चायां तु सामीप्यं ध्यानात्सारूप्यमेव च ।
तत्तु तत्समता मुक्तिः सा संपूर्णमनोरथा ॥
शिवसमानतारूपं शिवविग्रहमेव च ।
सायुज्यमिति तत्प्रोक्तमित्यादि वचनादि यत् ॥
पुरुषार्थेषु परमस्तत्प्राप्तौ साधनात्मकः ।
योग एव स कर्तव्यो मृगेन्द्रादिषु विश्रुतः ॥
अथवात्मवतां मन्वा स्वाधिकारं सुदुष्करम् ।
यतेरन्नात्मवत्तायै देशिकाद्या जिगीषवः ॥
तदात्मवत्त्वं योगित्वं जिताक्षस्योपपद्यते ।
प्राणायामाद्यनुष्ठानाज्जिताक्षत्वं शनैः शनैः ॥
प्राणायामः प्रत्याहारः धारणा ध्यानवीक्षणे ।
जपः समाधिरित्यङ्गान्यङ्गी योगोऽष्टमः स्वयम् ॥
प्राणः प्रागुदितो वायुरायामोऽस्य प्रवेदनम् ।
प्रेरणा कुष्टिसंरोधलक्षणं क्रतुदोषकृत् ॥
ततः सुखलवास्वादे तेषां वृत्तस्य चेतसः ।
प्रत्याहारो विधातव्यः सर्वतो विनिवर्तनम् ॥
तेनेन्द्रियार्थसंसर्गविनिवृत्तेश्चितो मतिः ।
धारणा योग्यतामेति पदे स्वेच्छाप्रकल्पिते ॥
चिन्ता तद्विषयध्यानं तच्चादिष्टं मुहुर्मुहुः ।
दृष्टमित्यत्र मन्त्राणि तानि मूर्धादितः स्मरेत् ॥
ऊर्ध्वप्राक्दक्षिणादीनि पञ्चेशानेन कल्पयेत् ।
उत्तमाङ्गानि वक्त्राणि वक्त्राम्बुजचतुष्टयम् ॥
इत्यादिवचनात्स्पष्टमर्चनापटलादिषु ।
तदेकतानतामेति स समाधिर्विधीयते ॥
जपस्तद्भाषणं ध्येयं संमुखीकरणं मुने ।
ऊहो हि वीक्षणं वस्तु विकल्पानन्तरोदितः ॥

यदा वेत्ति पदं हेयमुपादेयं च तत्स्थितेः ।
तत्पोषकं विपक्षं च यच्च तत्पोषकं परम् ॥
इत्यादिवचनाच्छुद्धशैवयोगोऽवधार्यताम् ।
एवं योगक्रमस्त्वन्ययोगिनामपि संमतः ॥
तत्तन्मतानुसारेण सकलध्यानिनां नृणाम् ।

எனவும் பிறவும் வருமாற்ருன் உணர்க. இனி "நிகழ்ந்திடுமோ சித்திகளும் முத்தியும்" என்பது முற்கூறிய வாருகும்.

184 * * *

"ஓதியிடு மநாதி சைவர்" என்பது அநாதி சைவயோக மதமும் ஆதி சைவ யோகமதமும் கூறுகின்றது. இவற்றுள் அநாதி சைவயோக மதம் வருமாறு சர்வசித்தாந்த விவேகத்தில் :-

अनादिशैवसिद्धान्ते त्वङ्गीकृत्य यथोचितम् ॥
पूर्वोक्तेषु विशेषेण कथ्यते लेशतः स्फुटम् ।
शुद्धविद्यादितत्त्वानां जडता न शिवात्मता ॥
नादस्य ज्ञानरूपत्वं स शिवः स्यादिति श्रुतिः ।
न तु शब्दादृते पुंसः प्रत्ययोऽस्ति कदाचन ॥
शब्दानुविद्धमेवेह विश्वज्ञानं प्रदृश्यते ।
इति तज्ज्ञानसंसिद्धिः सूक्ष्मादिक्रमतः स्फुटम् ॥
तदेव प्रणवाकारं शिवं चैव तथागमः ।
नादबिन्दूद्भवाकारमोङ्कारं शुद्धतत्त्वकम् ॥
शुद्धज्ञानं स्वताज्ञांशं शुद्धवर्त्मनि कारणम् ।
ज्ञानबीजं पराकारमोङ्कारं प्रभुरीश्वरः ॥
तत्सादाख्यशिवाकारं कलापञ्चकसम्भवम् ।
अकारोकारमकारबिन्दुनादश्च पञ्चमम् ॥
ओङ्कारं स्वकलाकारं मध्ये वाक्पञ्चकोद्भवम् ।
महासूक्ष्मान्नादमुत्पन्नं सूक्ष्माद्बिन्दुसमुद्भवम् ॥

पश्यन्ती तन्मकारोऽमुकारो मध्यमोदयम् ॥ ?
अकारोत्पन्नवैखर्या आदिवाक् पञ्चसाधनम् ।
तन्मध्ये तु महेशश्च रुद्रविष्ण्वात्मभूरिति ॥
पञ्चमस्य कलाशक्तिः पञ्चकृत्योद्भवं तथा ।
सृष्ट्यादि पञ्चकृत्यर्थं ब्रह्मादि देवसम्भवम् ॥
षट्त्रिंशत्तत्वसंभिन्ना कुटिला शक्तिरुद्भवा ।
कुटिला कुण्डली व्याप्ता कुण्डली प्रणवोदिता ॥
इति सर्वजगत्कर्ता शिवो नादात्मकः स्मृतः ।
स्वस्वावसरभेदेन श्रूयते द्विविधः पुनः ॥
.... .... शब्दब्रह्मपरं तु यत् ।
परं तत्त्वमुद्दिष्टं ब्रह्मशब्देन शब्दितम् ॥
... ... मयं यत्तत् सदाशिवमिति स्मृतम् ।
सदाशिवतनुः साक्षात् प्रणवः स्याज्जनार्दन ॥
सर्वकारणभूतोऽसौ देवदेवः सदाशिवः ।
तन्नादो परनादः स्यात् नान्यथेति तथागमः ॥
... ... शब्दार्थं ध्यायेदोङ्कारमीश्वरम् ।
इत्येवं वैदिकेऽप्युक्तं श्रूयते च शिवागमे ॥
ममैषा परमा मूर्तिः नादसंज्ञा वरानने ।
चिन्त्यते योगिभिर्नित्यमपुनर्भवकाङ्क्षिभिः ।
शब्दतत्वे परे लीने ... ... गतमानसः ॥
परमोक्षमवाप्नोति शब्दस्यैवार्थसिद्धये ।
तत्सिद्धौ लययोगी स्यात् श्रूयते तस्य वैभवम् ॥
ब्राह्मणानां शतं पुण्यमधिकं वेदवेदिनाम् ।
तेषां सहस्रगुणिताः शैवतन्त्रेषु दीक्षिताः ॥
दीक्षितानां च सर्वेषां यजमानो विशिष्यते ।
तेभ्यश्च यजमानेभ्यो भस्मलेपी विशिष्यते ॥

भस्मलेपिसहस्राणां पूजकोऽप्यधिको भवेत् ।
पूजकानां च सर्वेषां मन्त्रवेत्ता विशिष्यते ॥
मन्त्रवर्णविदां तेषामध्वज्ञाता विशिष्यते ।
अध्वविदां च सर्वेषां * प्रासादज्ञो विशिष्यते ॥
प्रासादज्ञानवेदीनां लययोगी विशिष्यते ।
लययोगवतां पुंसां प्राणलिङ्गी विशिष्यते ॥
इत्येवं नासतो मुक्तिःशुद्धतत्त्वसमाश्रया ।
अथोपास्तिक्रमः शैवे योगदीक्षापुरःसरम् ॥
ज्ञेयं गुरुमुखादेव शक्तिपातपवित्रितैः ॥
इत्यनाद्याख्यशैवार्थः कथितः संग्रहादिह ।

என வருமாற்றான் உணர்க. இனி ஆதிசைவம் என்னும் சித்தாந்த சைவ யோகமதம் வருமாறு சர்வசித்தாந்த விவேகத்தில் :-

अथ सिद्धान्तशैवस्तु संग्रहेण निगद्यते ।
योगसामान्यतः प्रोक्तमङ्गीकृत्य यथोचितम् ॥
पतिः पशुश्च पाशश्च पदार्थस्त्रिविधो मतः ।
अशुद्धाध्वा तु पाशःस्यात् कलाभित्तिस्तदुच्यते ॥
पुंस्तत्त्वं पशुरेव स्यान्नत्वन्यश्चेतनो मतः ।
पुंस्तत्त्वं च विना भोगानुपपत्तेः क्वचित् क्वचित् ॥
तस्यात्मेत्यादि संज्ञास्तु तस्यावसरभेदतः ।
तदेवं शुद्धशैवाख्ये सिद्धान्ते श्रूयते स्फुटम् ॥
कलोद्दलितचैतन्यो विद्यादर्शितगोचरः ।
रागेण रञ्जितश्चापि बुद्ध्यादिकरणैर्युतः ॥
मायाद्यवनिपर्यन्ततत्वभूतात्मवर्त्मनि ।
भुङ्क्ते तत्र स्थितान्भोगान् भोगैकरसिकःपुमान् ॥

* प्रासादं ज्ञानभूषणम् —इति पाठान्तरम् ।

तत्प्रेरकः पतिः सोऽयं शिवतत्त्वात्मको मतः ।
शिवतत्त्वं यथाप्रोक्तं प्रेरकाख्यमिति श्रुतेः ॥
विदन्त्यक्षाणि पुंसार्थान्न स्वयं सोऽपि शम्भुना ।
इत्येवं तत्प्रयोगश्च मुक्त्युपायस्तु कथ्यते ॥
पतिस्तु शिवतत्त्वाख्यं पञ्चधा कार्यभेदतः ।
ज्ञानं नादस्वरूपं च क्रियारूपं तु शक्तिकम् ॥
ज्ञानक्रियासमावेशात् सादाख्यं तत्त्वमुद्भवम् ।
ज्ञानन्यूनं क्रियाधिक्यं तत्त्वं माहेश्वरं भवेत् ॥
योगाधिक्यं क्रियान्यूनं शुद्धविद्याख्यरुद्रकः ।
शुद्धतत्त्वमिति प्रोक्तं नित्यं स्वातन्त्र्यविग्रहम् ॥
कृत्यभेदं विना नैवमेतत्पूर्वा पराक्रमः ।
इति नानाविधस्त्वेकः शिवो ध्येयस्तथागमः ॥
स तु निरञ्जनः शान्तः सर्वज्ञः सर्वगः प्रभुः ।
नानारूपविकल्पेन ध्येयः सिद्ध्यर्थ ईश्वरः ॥
तदेवं पञ्चतत्त्वेषु शिवशक्त्योः प्रधानता ।
सर्वेषामपि मूलत्वादिति ध्येयं मुमुक्षुभिः ॥
तद्व्यष्टिस्थानतो वाथ समष्टिध्यानतः पुनः ।
एवं हि श्रूयते शैवे शुद्धविद्या हिरण्मया ॥
महेश्वरः श्वेतभासः सादाख्यं स्फटिकोपमम् ।
बिन्दुनादस्वरूपं तु श्वेतरक्तप्रकाशकम् ॥
इति तद्व्यष्टितो ध्यानं समष्टिध्यानमुच्यते ।
कुन्देन्दुतुहिनप्रख्यं वृत्तं सर्वार्थदर्शकम् ॥
शिवतत्त्वं स्मृतं ह्येतत्पञ्चवक्त्रं चतुर्भुजम् ।
एतद्ध्यानादणोर्मुक्तिरणिमादि पुरःसरम् ॥
तदेवं ध्यानतः सिद्धौ भौतिकं तु नियामकम् ।
यस्मान्नाचेतनं तत्त्वं सिद्धमप्युपकारकम् ॥

शैवं वपुरिति ध्यायेदतो यत्तत्समीहितम् ।
इत्येवं संग्रहेणायं सिद्धान्तः कथितः स्फुटम् ॥

என வருமாற்ருன் உணர்க. இவ்வாறு தத்துவப்பிரகாசத்திலும்.

" சுத்த மாயையிற் ருேன்றுந் தத்துவமே சிவமுந்
தோன்றிய சத்தியுமாகு நின்ற தவன்பேதம்
வைத்த சுத்த புருடனே யான்மாவேன்றும்
மாறின் முத்தி கூறுகின்ற சித்தாந்தசைவற்
குத்தம மாய் முத்தசித்தாஞ் சிவம் பாசமாமோ
வுரு மாயைக் காரியந்தானு யிராகி விடுமோ
சத்தியமே யிது பாச ஞான மாகுந்
தன்மையறி யார்க்கு முத்தி தானு மிலேயாமே." (195)

என வரும். ஆதிசைவரேன வேருயின் அதுவும் வருமாறு அதனில்.

" அண்டமேல்லாம் பீடமாம் விந்து வாகும்
ஆவியேல்லா மிலிங்க மாம் நாதமாகும்
குண்டகையும் கோளகையுமிதுவே யேன்று
கோண்டு நினேப்பது முத்தியேனு மாதிசைவா
குண்டகையாம் பீடந்தத்துவங் களேல்லாம்
கூடியவா றெங்ஙனே யருவாகி யுயிர்தான்
பிண்டமதா மிலிங்கமதாய் நாதமான
பிடிபா டேப்படிச் சகயோகப் பேராமிதுவே" (200)

என வரும். முன்னர் " ஆதிசைவம் பன்னிரண்டு சடைகள்கட்டி " (ஞானவ-57) என்றற்ருேடக்கத்தாற் கூறும் ஆதிசைவர் தக்ஷிணசைவ பேத மேன்க. இவ்வாறே.

" அவையூர்த்வ சைவமநா தியினேடு மாதி
யனுசைவ மற்றையவாந் தரமாஞ் சைவம்
நவிலுமிச் சிரசைவம் பேத சைவம்
நண்ணுகுண சைவமாக் கினேயாஞ் சைவ
மிவையோடு யோகசைவ ஞான சைவ
மிலங்குசுத்த சைவமேலாம் இவைபனி ரண்டோடத்
துவசைவம் சாமான்ய சைவம் ஆகத்
தோகை பதினுலாம் சுத்த மேலாம்." (ஞானவ - 54)

எனத் தக்ஷிணபேதமான சுத்தசைவ மதங்கள், சித்தாந்தத்திற் கூறும் சுத்தசைவ பேதங்கள் போலப் பெயரோன்ருயிருத்தலின், சித்தாந்தமு மோன்றேனுது வேறுபடு மேன்க. அவை தத்துவப் பிரகாசத்திலும் மற்றிடத்தும் வந்தவழிக் கண்டு கோள்க. இவ்வாறு வரும் பேதங்கள், கோடற்கன்ருே,

முன்னர் "இன்னணமாஞ் சகளயோ கத்தின் வல்லோர்" (ஞாறுவ-181) என்னும் பாட்டில் "மன்னும வாங்தரர்கள் சுத்தரோடு மறுதி சொல்லி வருசித்தாங்த சைவர் பிறர்" எனக் கூறியதூஉம்? அன்றிச்........சைவபேதத்துள்.

அசுத்த சைவ மத மாமாறு தத்துவப் பிரகாசத்தில்:-

"நெறியெல்லாம் சைவநெறி போல நின்று
நிலைமைமூ வுருவுமோக்கு மென்னக் கொண்டு
பிறிவறவே யருச்சிக்கை முத்தி யென்று
பேசியிடு மிவ்வசுத்த சைவனே யுனக்குக்
குறிகொண் முத்தி யிடம் பிரம லோகமோ திருமால்
குலவிய வைகுண்டமோ கயிலை மலைதானே
பிறிவிலைதான் மூன்றிடத்தும் போயிருந்து வருமோ
பிணக்கமாய் விடுங் கணக்கிற் பெறுவதில்லை காணே." (193)

என வரும். இதுவே குணசைவமும் ஆம். அது வருமாறு சர்வசித்தாங்த விவேகத்தில்.

अथात्र गुणशैवे तु जगत्सर्वं गुणान्वितम् ।
कैवल्यं साधकानां तत्त्रिमूर्त्याराधनात् स्मृतम् ॥

इत्ययं किं प्रतिपादयति ? शुद्धशैवभेदेषु ... सिद्धपदमुक्तिपादेषु प्रागुद्दिष्टक्रमेण प्रथमं गुणशैवमतं दर्शयति । अत्र गुणशैवो नाम शुद्धशैव एव । तन्मते विश्वस्य गुणान्वितत्वप्रतिपादनं प्राकृतप्रपञ्चं विना तदूर्ध्वकलादि तत्वतात्विकार्थानामभ्युपगमात् । तदुक्तंच ।

न तदस्ति जगत्यस्मिन् वस्तु किंचिदचेतनम् ।
यन्नाव्याप्तं गुणैर्यस्मिन् नैको वा मिश्रको गुणः ॥
इति मृगेन्द्रशास्त्रोक्तेर्जगत्सर्वं गुणान्वितम् ।
तथा भारतपक्षादौ विस्तरेण च दर्शितम् ॥
ततस्तदूर्ध्वमधोनकलादि बहुधेरितः ।
तथा चास्मिन्मते तत्वं प्रधानाख्यं च कर्म यत् ॥
तिरोधायी च पाशः स्यात् सकलः पशवो मताः ।
देवादिस्थावरान्ताश्च विज्ञानप्रलयाकलाः ।
ब्रह्मा विष्णुश्च रुद्रश्च जगत्कर्ता तथागमः ॥

अचेतनं विभु सूक्ष्मं भोग्यं साधारणं ध्रुवम् ।
चतुर्विंशकमेकं च प्रधानगुणलक्षणम् ॥
पुंसां भोगापवर्गार्थमीश्वरेच्छा प्रचोदितम् ।
प्रधानाच्च भवेद्बुद्धिः जगद्धेतुशिवाज्ञया ॥
बुद्धेरपि च संक्षोभादहङ्कारस्त्रिधा भवेत् ।
अहङ्काराच्च सूक्ष्माणि तन्मात्राणीन्द्रियाणि च ॥
सूक्ष्मेभ्यः पञ्च भूतानि तेभ्यः स्थूलमिदं जगत् ।
चतुर्विंशकमव्यक्तं पुरुषः पंचविंशकः ॥
क्वचित्कलादिभेदानां कथनं तु शिवागमे ।
अवस्थान्तरभेदेन प्रकृतेरिति सम्मतम् ॥
अथ तत्पुरुषश्चात्र श्रुतो लक्षणपूर्वकम् ।
किंचित्कर्ता स किंचिज्ज्ञः पुरुषः पंचविंशकः ॥
न करोति यतः सर्वं स भोग्यं च करोति च ।
अतः स्वातन्त्र्यवान्नायं किंचित्कर्ताणुरेव च ॥
न वेत्ति तत्वतः सर्वं तेनाज्ञः पुरुषः स्मृतः ।

इति। अथ त्रिमूर्त्याराधनादेव मुक्तिप्रतिपादनं तदन्यतया महेश्वरादिदेवतानभ्युपगमात्। तदुक्तं च

गुणशैवमते कर्ता रुद्र एकस्तथा पुनः ।
त्रिविधःकृत्यभेदेन गुणाविष्टस्तथागमः ॥
संहृत्य भुवनं विश्वं गोप्तान्तः संचुकोच सः ।
एक एव तथा रुद्रो न द्वितीयश्च कश्चन ॥
इति स्वायंभुवे प्रोक्तः शिवधर्मोत्तरे पुनः ।
रुद्रः षड्विंशकः प्रोक्तः शिवः परमकारणः ॥
प्रधानादभवद्रुद्रस्तथा विष्णुः पितामहः ।
सत्कार्यकरणोपेता स विशुद्धा महेश्वराः ॥
जगतः कारणत्वेन त्रयो देवा व्यवस्थिताः ।

